प्रियतर प्रयो निबन्धनमेव द्रष्टव्यम् । एवम् ऊर्जो बलं विद्यते यत्र तदपि निबन्धनमेव । अनौचित्यप्रवृत्तत्वादत्र बलयोगः । समाहितं परिहारः । स च प्रकृतत्वादुक्तभेदविषयः प्रशमापरपर्यायः ।) तत्र यस्मिन् दर्शने[1] वाक्यार्थीभूता रसादयो रसवदलंकारः, तत्राङ्गभूत-रसादिविषये रसवदाद्यलंकारः द्वितीय उदात्तालंकारः । यन्मते तु अङ्गभूतरसादिविषये रसवदाद्यलङ्काराः, अन्यस्य रसादिध्वनिना व्याप्तत्वात्, तत्र उदात्तालङ्कारस्य विषयो नावशिष्यते, तद्विषयस्य रसवदादिना व्याप्तत्वम् ॥—*Op. cit.*, pp. 182 86.

Kuntaka, in his *Vakroktijivita*, does not regard रसवत् as a separate figure of speech at all, and criticises his predecessors including even the *Dhvanikāra* for holding such a view. According to him the designation रसवत् is quite a misnomer inasmuch as the possessive suffix मतुप् is unmeaning and misleading even. We quote below selected portions of the *Vrtti* on *Vakroktijivita* for the convenience of readers :—

"..इदानीं रसात्मनः प्रधानचेतनपरिस्पन्दवर्ण्यमानवृत्तेरलङ्कार-कारान्तराभिमतामलङ्कारतां निराकरोति—

"अलङ्कारो न रसवत् परस्याप्रतिभासनात् ।
स्वरूपादतिरिक्तस्य शब्दार्थासङ्गतेरपि ॥

..तदिदमत्र तात्पर्यम्—यत् सर्वेषामेवालङ्कृतीनां सत्कविवाक्यानामिदमलङ्कार्यमिदमलंकरणम् इत्यपोद्धारविहितो विविक्तभावः सर्वस्य कस्यचित् प्रमातुश्चेतसि परिस्फुरति । रसवदलङ्कारवत् इति वाक्ये पुनरवहितचेतसोऽपि न किंचिदे(तदे)व बुध्यामहे । तथा च—यदि शृङ्गारादिरेव प्राधान्येन वर्ण्यमानोऽलंकार्यस्तदन्येन केनचित् अलंकरणेन भवितव्यम् । यदि वा तत्स्वरूपमेव तद्विदाह्लादनिबन्धनत्वादलङ्करणमित्युच्यते, तथापि तद्व्यतिरिक्तमन्यदलङ्कार्यतया प्रकाश-

1. अन्यमतवादिनां मते इत्यर्थ —Jayaratha's *Vimarsini* thereon.

नीयम् । तदेवंविधो न कश्चिदपि विवेकश्चिरन्तनालंकारकाराभिमते रसवदलंकारलक्षणोदाहरणमार्गे मनागपि विभाव्यते । ..अत्रैव ..उपक्रमते—शब्दार्थासङ्गतेरपि । शब्दार्थयोरभिधानाभिधेययोरसन्वयाच्च रसवदलंकारोपपत्तिर्नास्ति । अत्र च रसो विद्यते तिष्ठति यस्येति मत्प्रत्ययविहिते तस्यालंकार इति षष्ठीसमासः क्रियते, रसवांश्चासौ अलंकारश्चेति विशेषणसमासो वा । तत्र पूर्वस्मिन् पक्षे—रसव्यतिरिक्तमन्यत् पदार्थान्तरं विद्यते यस्यासौ अलंकारः । काव्यमेवेति चेत्, तत्रापि तद्व्यतिरिक्तः कोऽसौ पदार्थो यत्र रसवदलंकारव्यपदेशः सावकाशतां प्रतिपद्यते ? विशेषातिरिक्तः (?) पदार्थो न कश्चित् परिदृश्यते यस्तद्वानलंकार इति व्यवस्थितिमासादयति । तदेवमुक्तलक्षणे मार्गे रसवदलंकारस्य शब्दार्थसङ्गतिर्न कदाचिदस्ति । ......अथवा चेतनपदार्थगोचरतया रसवदलंकारस्य, निश्चेतनवस्तुविषयत्वेन चोपमादीनां विषयविभागो व्यवस्थाप्यते, तदपि न विद्वज्जनावर्जनं विदधाति । यस्माद् अचेतनानामपि रसोद्दीपनसामर्थ्यसमुचितसत्कविसमुल्लिखितसौकुमार्यसरसत्वादुपमादीनां प्रविरलविषयता निर्विषयत्वं वा स्यादिति शृङ्गारादिनिष्यन्दसुन्दरस्य सत्कविप्रवाहस्य च नीरसत्वं प्रसज्यते इति प्रतिपादितमेव पूर्वसूरिभिः । यदि वा वैचित्र्यान्तरमनोहारितया रसवदलंकारः प्रतिपाद्यते, यथाभियुक्तैस्तरेवाभ्यधायि—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।

काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः ॥ इति ॥

यत्रान्यो वाक्यार्थः प्राधान्यादलंकार्यतया व्यवस्थितस्तस्मिन् तदङ्गतया विनिबध्यमानः शृङ्गारादिरलंकारतां प्रतिपद्यते । यस्माद् गुणप्रधानभावाभिव्यक्तिपूर्वमेव विषयविषये विभूष्यते भूषणविवेकस्यविनिरुज्जृम्भते ।....

....किं च, 'काव्ये तस्मिन्नलंकारो रसादिः' इति रस एवालंकारः केवलः, न तु रसवदिति मत्प्रत्ययस्य जीवितं किञ्चिदभिहितं

स्यात् ॥—*Op cit*, pp 156 166

TEXT

§ १३। किञ्च—

तमर्थमवलम्बन्ते येऽङ्गिन ते गुणाः स्मृताः।

अङ्गाश्रितास्त्वलंकारा मन्तव्याः कटकादिवत् ॥६॥

ये तमर्थं रसादिलक्षणमङ्गिनं सन्तमवलम्बन्ते ते गुणा शौर्यादिवत्। वाच्य वाचकलक्षणान्यङ्गानि। ये पुनस्तदाश्रितास्तेऽलंकारा मन्तव्याः कटकादिवत् ॥

EXPOSITION

§ 13 We have noted that Dandin and, following him, Udbhata in his lost *Bhamaha vivarana* took up their position in favour of the identity of the *gunas* and *alamkāras* (1 Sec §3) It was Vāmana who first endeavoured to draw a line of demarcation between these two categories, but he differed essentially from the *Dhvani* school in so far as he posited *riti* as the soul of poetic art while according to the latter it is the *suggested sense* (*dhvani*), that constitutes the very essence of poetry Another important point of difference between Vamana and Dhvanikāra is that while the former is a follower of Dandin with regard to the number of *gunas* and posit *ten* such properties—both belonging to शब्द and अर्थ, the latter following Bhamaha recognises only *three*—viz, माधुर्य, ओज and प्रसाद[1] The following extract from the *Kāmadhenu* on Vamana s *Kavyālamkāra sutra vrtti* is very illumi

1 Compare the following couplet occurring in the *Sāhityacudāmani* of Bhattagopala—

राजा नामो गुणानाह किन्ति चतुरश्च मान्। वामनो दश तन्मारानाह औजप भामह ॥ —*Ibid*, vol II, p 190 (*Trivandrum Sanskrit Series Edn*)

nating as it brings out clearly the difference between the respective view-points of the two schools :—

"वस्तुतो रीतिधर्मत्वेऽपि गुणानामात्मलाभस्य शब्दार्थाधीनत्वात् तस्य निरूप्यत्वाच्च शब्दार्थधर्मत्वमुपचारादुक्तम् ।....एवञ्च सति उपक्रमोपसंहारलिङ्गैराचार्यतात्पर्यपर्यालोचनायामात्मभूतरीतिनिष्ठा गुणास्तच्छरीरभूतशब्दार्थनिष्ठाः पुनरलंकारा इति निश्चीयते । अतो मन्यामहे गुणत्वादोजःप्रभृतीनामात्मनि समवायवृत्त्या स्थिति-रलंकारत्वाद् यमकोपमादीनां शरीरे संयोगवृत्त्या स्थितिरिति ग्रन्थकारस्याभिमतम् इति । न ह्यविपश्चिदपि कश्चिदभिजानीयाद-भिवदेद् वा न गुणानामात्मनि रीताविवालंकाराणां शरीरभूते शब्दार्थयुगले समवायवृत्त्या स्थितिरिति । एवञ्च गुणालंकाराणामु-भयेषामपि समवायवृत्त्या स्थितिरित्यभिमन्यमानैर्भेदाभिधानं गड्डरिका-प्रवाहन्येनेति यदुक्तं तन्निरस्तम् ।.. .अत एव ओजःप्रसादादीनां गुणत्वं यमकोपमादीनामलंकारत्वमिति च व्यपदेशभेदोऽप्युपपद्यते । एवञ्च सति पूर्वे नित्या इति सूत्रे गुणानां नित्यत्वमलंकाराणाम-नित्यत्वम् इति सूत्रयता सूत्रकृता गुणानां काव्यव्यवहारप्रयोजकत्व-मुक्तं भवति । तथा च परमते व्यङ्ग्यस्य प्राधान्ये ध्वनिरुत्तमं काव्यम् , गुणीभावे गुणीभूतव्यङ्ग्यं मध्यमं काव्यम् , सम्भावनामात्रे चित्रमवरं काव्यम्, इति काव्यभेदाः कथिताः । तथात्रापि गुणसामग्र्ये वैदर्भी, अविरोधिगुणान्तरानिरोधेन ओजःकान्ति-भूयिष्ठत्वे गौडीया, माधुर्य-सौकुमार्यप्राचुर्ये पाञ्चालीति काव्यभेदाः कथ्यन्ते । रीति-ध्वनिवादमतयोरियांस्तु भेदः । ध्वनिरात्मा काव्यस्य, स एव तद्व्यवहार-प्रयोजक इत्युभयत्रापि आत्मनिष्ठा गुणाः । शब्दार्थयुगलं शरीरं तन्निष्ठा अलंकारा इति च सर्वमवि-शिष्टम् ॥—*Op cit.*, pp. 71–72 (*Benares Sans. Series*).

All later writers on Poetics have systematically followed this distinction between गुण's and अलंकार's as shown by the

*Dhvanikāra* with the one prominent exception of Jagannātha. The *guṇas* are the exclusive attributes of रस—the soul of poetry, and reside therein through the relation of *inherence* ( समवाय ), while the अलङ्कार's belong to शब्द and अर्थ through the relation of *conjunction* ( संयोग ), though in the last analysis they serve to highten the emotional effect. It is but a direct corollary of this theory that whereas the *alaṃkāras* are susceptible of removal and substitution, without any commensurate deficiency of the aesthetic effect, the गुण's cannot be removed without causing the very death of the soul itself. Thus while गुण's are *essential* to the very existence of a *Kāvya*, the *alaṃkāras* are merely external appendages. Govinda in his *Pradīpa* admirably brings out the distinction between the two categories: एवं च रसस्योत्कर्षहेतुत्वे सति रसधर्मत्वम्, तथात्वे सति रसाव्यभिचारिस्थितित्वम्, अयोगव्यवच्छेदेन रसोपकारकत्वं चेति लक्षणत्रय गुणानां द्रष्टव्यम्।....तथा च रसोपकारकत्वे सति तदवृत्तित्व, तथात्वे सति रसव्यभिचारित्वं, अनियमेन रसोपकारकत्वं चेति सामान्यलक्षणत्रयम् अलंकाराणाम्॥" —*Op. cit.*, pp. 174-75. For Jagannātha's *critique* of this definition of गुण's as the exclusive attributes of *rasa*, see *supra*.

TEXT

§ १४। तथा च—

श्रृङ्गार एव मधुरः परः प्रह्लादनो रसः।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥७॥

श्रृङ्गार एव रसान्तरापेक्षया मधुरः प्रह्लादहेतुत्वात्। तत्प्रकाशनपरशब्दार्थतया काव्यस्य स माधुर्यलक्षणो गुणः। श्रव्यत्वं पुनरोजसोऽपि साधारणमिति॥

## EXPOSITION

§ 14 माधुर्य is the property of the sentiment शृङ्गार, but, even though it resides in शृङ्गार-रस, still it is commonly used to qualify शब्द and अर्थ, constituting the body of poetic art, as they serve to *suggest* the attribute of माधुर्य. Thus usages like मधुर. शब्द, मधुर अर्थ, etc are only *secondarily* justified on the basis of *superimposition* (उपचार) or *transference* Compare · आत्मन एव हि यथा शौर्यादयो नाकारस्य, तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम्। क्वचित् तु शौर्यादि-समुचितस्य आकारमहत्त्वादेर्दर्शनात् आकार एवास्य शूर इत्यादे-र्व्यवहारादन्यत्र अशूरेऽपि विततकृतित्वमात्रेण शूर इति, क्वापि शूरेऽपि मूर्तिलाघवमात्रेणाशूर इति अविश्रान्तप्रतीतयो यथा व्यवहरन्ति, तद्वत् मधुरादि-व्यञ्जक-सुकुमारादिवर्णाना मधुरादि-व्यवहारप्रवृत्तेरमधुरादिरसाङ्गाना वर्णाना सौकुमार्यादिमात्रेण माधुर्यादि, मधुरादिरसोपकरणाना तेषामसौकुमार्यादेरमाधुर्यादि, रसपर्यन्तविश्रान्तप्रतीतिवन्ध्या व्यवहरन्ति। अत एव माधुर्यादयो रसधर्मा समुचितैर्वर्णैर्व्यज्यन्ते, न तु वर्णमात्राश्रया ॥—*Kavya-prakasa*, Chapter VIII

Abhinavagupta thus explains the significance of the restrictive particle एव in the *karika* " . शृङ्गार एव इत्येवकार: किमर्थ ? उच्यते—नानेन रसान्तर व्यवच्छिद्यते, अपि तु आत्मभूतस्य रसस्यैव परमार्थतो गुणा माधुर्यादय:, उपचारेण तु शब्दार्थयोरित्येव-कारेण द्योत्यते"—*Op cit*, p 208 But Jagannātha contends that this position of the Dhvani school is untenable The attributes like माधुर्य etc that are posited to be the exclusive properties of रस, have no *objective* reality, and their existence can be proved neither on the strength of Perception (प्रत्यक्ष-प्रमाण) nor by Inference (अनुमान). They are solely ideal constructions consequent upon the abstractional faculties of

our mind So there cannot be any logic behind the argument of the Dhvani theorists, and even शब्द, अर्थ, वर्ण, रचना, रीति etc. can be as much qualified by माधुर्य etc as रस itself, on the basis of the *causal relation* subsisting between the former and the latter which are practically indistinguishable from the final aesthetic relish ( रसचर्वणा ) or the effects thereof—viz. द्रुति, दीप्ति and विकास, without resorting to *lakṣaṇā* as in the former view Those arguments are certainly formidable and illuminating We quote below the full text from *Rasagangādhara* bearing on this issue :—

"गुणाना चैषा द्रुति-दीप्ति-विकासाख्यास्तिस्रश्चित्तवृत्तय क्रमेण प्रयोज्या । तत्तद्गुणविशिष्टरस-चर्वणाजन्या इति यावत् । एवमेतेषु गुणेषु रसमात्रधर्मेषु व्यवसितेषु मधुरा रचना, ओजस्वी बन्ध इत्यादयो व्यवहारा आकारोऽस्य शूर इत्यादिव्यवहारवदौपचारिका इति मम्मटभट्टादय ॥ येऽमी माधुर्यौज प्रसादा रसमात्रधर्मतयोक्ता-स्तेषा रसधर्मत्वे कि मानम् ? प्रत्यक्षमेवेति चेत्, न । दाहादे कार्यादनलगतस्य उष्णस्पर्शस्य यथा भिन्नतयाऽनुभवस्तथा । द्रुत्यादि-चित्तवृत्तिभ्यो रसकार्येभ्योऽन्येषा रसगतगुणानामननुभवात् । तादृश-गुणविशिष्टरसाना द्रुत्यादिकारणत्वात् कारणतावच्छेदकतया गुणानाम-नुमानमिति चेत् । प्रातिस्विकरूपेणैव रसाना कारणतोपपत्तौ गुणकल्पने गौरवात् । शृङ्गार-करुण-शान्ताना माधुर्यवत्त्वेन द्रुतिकारणत्व, प्राति-स्विकरूपेण कारणत्वकल्पनापेक्षया लघुभूतमिति तु न वाच्यम् । परेण मधुरतरादिगुणाना पृथग्द्रुततरत्वादिकार्यतारतम्यप्रयोजकतयाऽभ्युप-गमेन, माधुर्यवत्त्वेन कारणताया गडुभूतत्वात् । इत्थ च प्रातिस्विक-रूपेणैव कारणत्वे लाघवम् । किं च आत्मनो निर्गुणतयाऽस्मत्सिद्धान्ते-रसगुणत्व माधुर्यादीनामनुपपन्नम् । एव तद्रुपाधि-रत्यादिगुणत्वमपि मानाभावात्, पररीत्या गुणे गुणान्तरस्यानौचित्याच्च । अथ 'शृङ्गारो मधुर'-इत्यादिव्यवहार कथमिति चेत् । एव तर्हि द्रुत्यादिचित्त-

वृत्तिप्रयोजकत्वम् । प्रयोजकतासंबन्धेन द्रुत्यादिकमेव वा माधुर्यादिकममस्तु ।[1] व्यवहारस्तु 'वाजिगन्धः उष्णा' इति व्यवहारवदक्षत. । प्रयोजकत्वं चादृष्टादिविलक्षण शब्दार्थ-रस-रचनागतमेव ग्राह्यम् । अतो न व्यवहारातिप्रसक्तिः । तथा च शब्दार्थयोरपि माधुर्यादेरीदृशस्य सत्त्वात् उपचारो नैव कल्प्य इति तु मादृशा. ॥"
—*Op. cit.*, pp. 66-68 (NSP. Edn).

श्रव्यत्व पुनः. . . .साधारणम्—Here the author covertly refers to the definition of माधुर्य as furnished by Bhāmaha-viz. "श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते" (*Kāvyālaṃkāra*, II. 3) In the printed texts the reading is—"श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते." *See* Rūcaka's *Kāvyaprakāśa-saṃketa* (edited by Prof. Siva Prasad Bhattacharya in the *Calcutta Oriental Journal* Vol. II, No. 7-8), pp 55, fn 5 According to Ānandavardhana श्रव्यत्व is not the uncommon characteristic of माधुर्य, as it is equally possible in the case of ओजस् as well

---

1 It is intersting to note that Viśvanātha also equates माधुर्य etc. with द्रुति, and criticises Mammaṭa who holds that the former are the *cause* of the latter and consequently distinguishes them from each other. Compare: चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ॥ यत्तु केनचिदुक्तम्—'माधुर्यं द्रुतिकारणम्' इति, तन्न । द्रवीभावस्य आस्वादस्वरूपाह्लादाभिन्नत्वेन कार्यत्वाभावात्'—*Sāhityadarpaṇa*, VIII. [illegible] and *vṛtti* thereon. *See* also Rāmacaraṇa's comments: आह्लादातिरिक्तस्य द्रवीभावस्य निर्वक्तुमशक्यतया आह्लाद एव पर्यवसानम् । एवमाह्लादजनकत्वापेक्षया लघुन आह्लादत्वस्यैव माधुर्यपदशक्यतावच्छेदकत्वमुचितमित्याह्लाद एव माधुर्यपदार्थ इति भाव ।—*loc. cit* Abhinavagupta too appears to hold the same view. " एवं माधुर्यौज प्रसादा एव त्रयो गुणा उपपन्ना भामहाभिप्रायेण । ते च प्रतिपत्त्रास्वादमया मुख्यतया रस आस्वाद्य उपचरिता रसे ततस्तद्व्यञ्जकयो शब्दार्थयोरिति तात्पर्यम्"—*Locana*, p 223.

## TEXT

§ १५। शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥८॥

विप्रलम्भशृङ्गार-करुणयोस्तु माधुर्यमेव प्रकर्षवत्। सहृदय-हृदयावर्जनातिशय निमित्तत्वाद्, इति ॥

## EXPOSITION

§ 15 It has been stated in the previous *Karikā* that माधुर्य is the attribute of शृङ्गार The present *Karikā* states that विप्रलम्भशृङ्गार and करुण possess that quality of माधुर्य in a higher degree, because as a result of the realisation of the last two emotions the heart is *more* softened ( द्रवीभूत ) than in the first case Others again hold that there is some difference in the degree of माधुर्य in the case of विप्रलम्भ and करुण too, the latter excelling the former, which on its part again is excelled by शान्त Compare *Rasagangadhara*. "रसेषु चैतेषु निगदितेषु माधुर्योज प्रसादाख्यास्त्रीन् गुणानाहुः। तत्र 'शृङ्गारे सयोगाख्ये यन्माधुर्यं ततोऽतिशयित करुण, ताभ्या विप्रलम्भे, तेभ्योऽपि शान्ते। उत्तरोत्तरमतिशयितायाश्चित्तद्रुतेर्जनना'दिति केचित्। 'सयोगशृङ्गारात् करुण शान्तयोस्ताभ्यामपि विप्रलम्भे'—इत्यपरे। 'सयोगशृङ्गारात् करुण-विप्रलम्भ शान्तेषु अतिशयितमेव न पुनस्तत्रापि तारतम्यम्' इत्यन्ये। तत्र प्रथम चरमयोर्मतयो 'करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्' इति प्राचा सूत्रमनुकूलम्।[1] तस्योत्तरसूत्रगतस्य क्रमेणेति पदस्यापकर्षानपकर्षाभ्या व्याख्याद्वयस्य सभवात्। मध्यस्थे तु मते करुणशान्ताभ्या विप्रलम्भस्य माधुर्यातिशये यदि सहृदयानामनुभवोऽस्ति साक्षी, तदा स प्रमाणम् ..."—p 66

1. *Kavyaprakasa*, VIII 48

TEXT

§ १६। रौद्रादयो रसा दीप्त्या
लक्ष्यन्ते काव्यवर्त्तिनः।
तद्व्यक्तिहेतू शब्दार्था-
वाश्रित्योजो व्यवस्थितम् ॥९॥

रौद्रादयो हि रसा परां दीप्तिमुज्ज्वलतां जनयन्तीति लक्षणया त एव दीप्तिरित्युच्यते। तत्प्रकाशनपरः शब्दो दीर्घसमासरचनालंकृतं वाक्यम्। यथा—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावबद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि! भीमः॥

तत्प्रकाशनपरश्चार्थोऽनपेक्षितदीर्घसमासरचनः प्रसन्नवाचकाभिधेयः। यथा—

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥

—इत्यादौ द्वयोरोजस्त्वम्॥

EXPOSITION

§ 16. दीप्ति (a particular state of mind like 'kindling up') is caused by the emotions like रौद्र etc and this दीप्ति is primarily denoted by ओज. As Abhinavagupta explains: "दीप्तिः प्रतिपत्तुर्हृदये विकास-विस्तार-प्रज्वलनस्वभावा। सा च मुख्यतया ओज शब्दवाच्या"—Thus, though ओजस् is identical with दीप्ति, it is used as an attribute of emotions like रौद्र, वीर and अद्भुत by *transference*, and consequently such usages

as ओजस्वी रस are justified. Again, by a second process of transference, it is used to signify शब्द, अर्थ etc. that suggest those emotions, and we get ओजस्वी शब्द, ओजस्वी अर्थ etc. Compare *Locana* '.....तया दीप्त्या आस्वादविशेषात्मिकया कार्यरूपया लक्ष्यन्ते रसान्तरात् पृथक्तया। तेन कारणे कार्योपचारात् रौद्रादिरेव ओज शब्दवाच्य। ततो लक्षित-लक्षणया तत्प्रकाशनपर शब्दो दीर्घसमास रचनावाक्यरूपोऽपि दीप्तिरुच्यते। यथा 'चञ्चद' इत्यादि। तत्प्रकाशनपरश्चार्थं प्रसन्नैर्गंभक वाचकैरभिधीयमान समासानपेक्ष्यपि दीप्तिरित्युच्यते। यथा—'यो य —' इत्यादि।''—pp 210 211

तत्प्रकाशन . वाक्यम्—*Words* that suggest ओजस् should be components of long compounds Mammata enumerates the *formal elements* that are suggestive of ओजस् thus —

'योग आद्य तृतीयाभ्यामन्त्ययो रेण तुल्ययो।
टादि शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि॥''

वर्गं प्रथमतृतीयाभ्यामन्त्ययो द्वितीयचतुर्थयो रेफेण अध उपरि उभयत्र वा यस्य कस्यचित् तुल्ययो तेन तस्यैव सवन्ध टवर्गोऽर्थात् णकारवर्जं शकार षकारौ दीर्घसमास विकटा सघटना' ओजस। उदाहरणम्— मूर्ध्नामुद्वृत्तकृत्त"-त्यादि।—*Kavyaprakasam*, Chapter VIII Compare also —'नैकट्येन द्वितीय चतुर्थवर्ग-वर्णटवर्ग-जिह्वामूलीयोपध्मानीयविसर्ग-सकारबहुलैर्वर्णैर्घटितो झय् रेफान्यतर-घटितसयोगपरह्रस्वैश्च नैकट्येन प्रयुक्तैरालिङ्गितो दीर्घवृत्त्यात्मा गुम्फ ओजस'—*Rasagangadhara* p 80

Ānandavardhana cites चञ्चद्भुज—'(*Venisamhara*, Act I 21) to illustrate how harsh letters, conjunct consonants of which रेफ and महाप्राण are components, and long compounds can suggest th- quality called ओजस, irrespective of the sense conveyed

तत्प्रकाशनपरश्चार्थं भिधेय —The suggestiveness of

the meaning does not require long compounds and depends on the theme being of a heroic import

यो य अहम—This [illegible] *Venisamhara*, III 32 Here, there are no long compounds, and yet there is sufficient apprehension of ओजस्, on account of the judicious selection of words that convey a sense full of heroic grandeur Cp °*Locana* अत्र पृथग्भूतैरेव क्रमाद् विमृश्यमानैरर्थैः पदात् पद क्रोध परा धारामाश्रित इत्यसमस्ततैव दीप्तिनिबन्धनम ।'—*loc cit* Abhinavagupta admirably points out how माधुर्य and ओजस् are mixed together in definite proportions in the emotions like भयानक हास्य, शान्त etc —' हास्यस्य शृङ्गाराङ्गतया माधुर्यं प्रकृष्ट विकासधर्मतया चौजोऽपि प्रकृष्टमिति साम्य द्वयो । भयानकस्य मग्नचित्तवृत्तिस्वभावत्वेऽपि विभावस्य दीप्ततया ओज प्रकृष्ट माधुर्यमल्पम् । बीभत्सेऽप्येवम् । शान्ते तु विभाववैचित्र्यात् कदाचिदोज प्रकृष्ट कदाचिन्माधुर्यमिति विभाग "—°*Locana*, p 212

TEXT

§ १७ । समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति ।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥
१०॥

प्रसादस्तु स्वच्छता शब्दार्थयोः । स च सर्वरससाधारणो गुणः सर्वरचनासाधारणश्च व्यङ्ग्यार्थापेक्षयैव मुख्यतया व्यवस्थितो मन्तव्यः ॥

EXPOSITION

§ 17. The attribute called प्रसाद (*Perspecuity*) is common to all the emotions and is not the exclusive property of any particular sentiment It consists in the *transparence* of words and meanings The words must be such that the readers may

not have any difficulty in grasping their sense *immediately*, without any contemplation[1] So also the theme or import must not be obscure and must have a universal appeal Consequently the presence of प्रसाद renders the realisation of an aesthetic emotion quick and devoid of any impediment Compare Abhinavagupta's comments समर्पकत्व सम्यगर्पकत्व हृदयसवादेन प्रतिपत्तॄन् प्रति स्वात्मावेशेन व्यापारकत्व झटिति शुष्ककाष्ठाग्निदृष्टान्तेन । अकलुषोदकदृष्टान्तेन च । तदकालुष्यप्रसन्नत्व नाम सर्वरसाना गुण । उपचारात्तु तथाविधे व्यङ्ग्येऽर्थे यच्छब्दार्थयो समर्पकत्व तदपि प्रसाद ।—*Locana* Mammata in his definition of प्रसाद makes use of the two metaphors employed by Abhinavagupta in the above extract

शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव य. ।
व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थिति ॥'

—*Kavyaprakāsa* Chap VIII

Thus, the Dhvani theorists posit three *gunas* only The twenty *gunas*, belonging to शब्द and अर्थ, of the ancients like Dandin, Vamana etc can be comprehended within these three Moreover, not all of them can be reasonably regarded as positive excellences, some of these being indifferent, while a few again turn out to be defects under certain circumstances and it is a misnomer to call them *gunas* indiscriminately Compare

केचिदन्तर्भवन्त्येषु दोषत्यागात परे श्रिता ।
अन्ये भजन्ति दोषत्व कुत्रचित् न ततो दश ॥

---

1 As Mammata states

श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् ।
साधारण समग्राणा स प्रसादो गुणो मत ॥

—*Op cit*, Chapter VIII

Also Jagannatha श्रुतमात्रा वाक्यार्थं करतलबदरमिव निवेदयन्ती घटना प्रसादस्य—*Rasagangadhara* p 80

—*Kavyaprakasa*, VIII 7 and *vrtti* thereon. For an elaborate discussion of the views of the ancients and moderns on the number of *gunas* see *Rasagangadhara*, pp 66 ff

## TEXT

§ १८। श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः॥
११॥

अनित्या दोषाश्च ये श्रुतिदुष्टादयः सूचितास्तेऽपि न वाच्ये अर्थमात्रे, न च व्यङ्ग्ये शृङ्गारव्यतिरेकिणि शृङ्गारे वा ध्वनेरनात्मभूते। किं तर्हि? ध्वन्यात्मन्येव शृङ्गारेऽङ्गितया व्यङ्ग्ये ते हेया इत्युदाहृताः। अन्यथा हि तेषामनित्यदोषतैव न स्यात्। एवमयमसंलक्ष्यक्रमद्योतो ध्वनेरात्मा प्रदर्शितः सामान्येन॥

## EXPOSITION

§ 18 It has been a common practice among the authors on Poetics to classify the defects into two groups, according as they are *universally* so (नित्यदोष) or not (अनित्यदोष) Thus, the second group comprises such defects as श्रुतिदुष्टत्व, अप्रतीतत्व, पुनरुक्तत्व etc, while the rest like च्युतसंस्कार, क्लिष्टत्व etc would be classed as belonging to the first group According to this classification श्रुतिदुष्टत्व would not be a defect in the case of emotions like रौद्र, वीर and भयानक where it would be regarded rather as a positive excellence, enhancing as it does the effect of the aesthetic relish As Viśvanātha states —

"वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्॥"
—*Sāhityadarpana*, VII. 16

But in the case of शृङ्गार, the use of harsh letters has to be

studiedly eschewed. As Jagannātha observes : "अथ विशेषतो वर्जनीया: ।........मधुररसेषु दीर्घसमासं झय्घटितसंयोगपरह्रस्वस्य विसर्जनीयादेश-सकार-जिह्वामूलीयोपध्मानीयाना रेफहकारान्यतरघटित-संयोगस्य हल्कां ल-म-न-भिन्नानां स्वात्मना संयोगस्य झय्द्वयघटित-संयोगस्य चासकृत्-प्रयोगं नैकट्येन वर्जयेत् । सवर्ण-झय्द्वय-घटित-संयोगस्य शभिन्न-महाप्राण-घटितसंयोगस्य सकृदपीति संक्षेप: ।।"—*Rasagangādhara*, pp 84–85.

This twofold classification of defects is justifiable if we *posit the existence of a soul, viz.* रस, *as distinct from the body* (शरीर) of poetry which is composed of शब्द and अर्थ.[1] The defects become only so, if they mar the beauty of the soul, though we usually refer to them as belonging to शब्द and अर्थ. Such usages are only *secondary*. श्रुतिदुष्टत्व is not a universal defect, because it does not mar the beauty of the soul (viz. रस) in *every* case. It mars the beauty of शृङ्गार, but not of रौद्र If this be not regarded as the criterion of the above classification, श्रुतिदुष्टत्व would also be counted as a variety of नित्यदोष, for the letters would remain harsh irrespective of any consideration of the nature of the emotion to which they might be related. Compare Mammata :—

1. As Abhinavagupta observes : "एवमस्मत्पक्ष एव गुणालंकार-व्यवहारो विभागेनोपपद्यत इति प्रदर्श्य नित्यानित्यदोषविभागोऽप्यस्मत्पक्ष एव सगच्छते इति दर्शयितुमाह—श्रुतिदुष्टादय इत्यादि ।।"—Mammata observes that this division of defects into two classes proves beyond doubt the existence of the *suggested sense* apart from the expressed sense : "यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्य-व्यञ्जकभावो नाभ्युपेयते तदाऽसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्य-दोषत्वमिति विभागकरणमनुपपन्नं स्यात् । न चानुपपन्नं, सर्वस्यैव विभक्ततया प्रतिभासात् । वाच्य-वाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावाश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौचित्येन उपपद्यत एव विभाग-व्यवस्था ।।"—*Kāvyaprakāsa*, Chapter V.

'मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्य ।
उभयोपयोगिन स्यु शब्दास्तेन तेष्वपि स ॥'

—*Kavyaprakasa*, VII 1

The following extract from Hemacandra's *Kavyanusasana* is very explicit on this point —रसस्योत्कर्षापकर्षहेतू गुणदोषौ भक्त्या शब्दार्थयो ॥ रसो वक्ष्यमाणस्वरूपस्तस्योत्कर्षहेतवो गुणा, अपकर्षहेतवस्तु दोषा । ते च रसस्यैव धर्मा, उपचारेण तु तदुपकारिणो शब्दार्थयोरुच्यन्ते । रसाश्रयत्व च गुणदोषयोरन्वयव्यतिरेकानुविधानात् । तथाहि यत्रैव दोषास्तत्रैव गुणा रसविशेषे च दोषा न तु शब्दार्थयो । यदि हि तयो स्युस्तर्हि बीभत्सादौ कष्टत्वादयो गुणा न भवेयु हास्यादौ चाश्लीलत्वादय । अनित्याश्चैते दोषा ।-यतो यस्याङ्गिनस्ते दोषास्तदभावे न दोषास्तद्भावे तु दोषा इत्यन्वयव्यतिरेकाभ्या गुणदोषयो रस एवाश्रय ॥—*Op cit*, p 16

Abhinavagupta explains श्रुतिदुष्टादि in the *karika* as referring to the defects mentioned by Bhamaha in the couplet

"श्रुतिदुष्टार्थदुष्टे च कल्पनादुष्टमित्यपि ।
श्रुतिकष्ट तथैवाहुर्वाचा दोष चतुर्विधम् ॥' —I 47

As he comments ' श्रुतिदुष्टादय इत्यादि । वान्तादयोऽसभ्यस्मृतिहेतव श्रुतिदुष्टा । अर्थदुष्टा वाक्यार्थबलादश्लीलार्थप्रतिपत्तिकारिण । यथा— छिद्रान्वेषी महास्तब्धो घातायैवोपसर्पति इति । कल्पनादुष्टास्तु द्वयो पदयो कल्पनया । यथा—'कुरु रुचिम्' इत्यत्र क्रमव्यत्यासे । श्रुतिकष्टस्तु 'अधाक्षीत्', 'अक्षोत्सीत्', तृणेढि' इत्यादि । शृङ्गार इत्युचितरसोपलक्षणार्थम् । वीरशान्ताद्भुतादावपि तेषा वर्जनात् ।' —*Locana* Abhinavagupta finally observes that Bhamaha himself did not at all classify the defects in the way stated above, nor did he show that श्रुतिदुष्ट etc can at all be regarded as गुण s in cases of emotions other than शृङ्गार All this has been done by the authors of the

*Dhvani* school for the first time. This is implied by the word सूचिना in the *vṛtti* Compare: सूचिता इति । न त्वेषां विषयविभागप्रदर्शनेन अनित्यत्वं भिन्नवृत्तादिदोषेभ्यो विविक्तत्वं प्रदर्शितम् । बीभत्स-हास्य-रौद्रादौ त्वेषामस्माभिरभ्युपगमात्, शृङ्गारादौ च वर्जनात् अनित्यत्वं च दोषत्वं च समर्थितमेवेति भाव. ॥—°*Locana*, pp. 214-215

TEXT

§ १९। तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये।
तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने ॥१२॥

अङ्गितया व्यङ्ग्यो रसादिर्विवक्षितान्यपरवाच्यस्य ध्वनेरेक आत्मा य उक्तस्तस्याङ्गानां वाच्य वाचकानुपातिनामलंकाराणां ये प्रभेदा निरवधयो ये च स्वगतास्तस्याङ्गिनोऽर्थस्य रस भाव तदाभास-तत्प्रशमलक्षणा विभावानुभाव-व्यभिचारिप्रतिपादन-सहिता अनन्ताः स्वाश्रयापेक्षया निःसीमानो विशेषाः तेषामन्योन्य-सम्बन्धपरिकल्पने क्रियमाणे कस्यचिदन्यतमस्यापि रसस्य प्रकाराः परिसंख्यातुं न शक्यन्ते किमुत सर्वेषाम्। तथाहि शृङ्गारस्याङ्गिनस्तावदाद्यौ द्वौ भेदौ—संभोगो विप्रलम्भश्च। संभोगस्य च परस्परप्रेमदर्शनसुरतविहरणादिलक्षणाः प्रकारा । विप्रलम्भ-स्यापि अभिलाषेर्ष्याविरहप्रवासविप्रलम्भादयः। तेषां च प्रत्येकं विभावानुभावव्यभिचारिभेदः। तेषां च देशकालाद्याश्रयावस्था-भेद इति स्वगतभेदापेक्षया एकस्य तस्यापरिमेयत्वम, किं पुनरङ्ग-प्रभेदकल्पनायाम्। ते ह्यङ्गप्रभेदाः प्रत्येकमङ्गिप्रभेद संबन्धपरि-कल्पने क्रियमाणे सत्यानन्त्यमेवोपयान्ति ॥

EXPOSITION

§ 19 In the preceding sections the *Dhvanikāra* has considered the nature of असंलक्ष्यक्रमव्यङ्ग्य—viz. रस, भाव etc Now

he observes that it is not possible to enumerate the different varieties of the principal emotions ( रस ) or of elements like विभाव, अनुभाव etc, that are subservient ( अङ्ग ) to them. So also it is not possible to compute precisely the ways in which the numerous figures of speech belonging to शब्द and अर्थ can be brought into relation with the different varieties of अलक्ष्यक्रमव्यङ्ग्य, as also the mutual relations in which the latter themselves can stand to each other There would arise endless varieties by permutation and combination, which it is impossible to enumerate severally But if we leave out the details we might classify all the different varieties of रस, भाव etc under one single category—viz असंलक्ष्यक्रमध्वनि, since they possess one element in common-viz the property of being suggested without any perceptible sequence intervening between the cognition of the वाच्यार्थ on the one hand and the final aesthetic relish on the other As Mammata, too, notes. "अन्योन्ययोगादेव स्याद् भेदसंख्याऽतिभूयसी ॥ एवमनेन प्रकारेण अवान्तरभेदगणनेऽतिप्रभूततरा गणना। तथाहि—शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्य का गणना तु सर्वेषाम् ॥"—*Op cit*, Chap V

TEXT

§२० । दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम् ।
बुद्धिरासादितालोका सर्वत्रैव भविष्यति ॥१३॥

दिङ्मात्रकथनेन हि व्युत्पन्नानां सहृदयानामेकत्रापि रसभेदे सहालंकारैरङ्गाङ्गिभावपरिज्ञानाद् आसादितालोका बुद्धिः सर्वत्रैव भविष्यति ॥ तत्र—

शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवान् ।
सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः ॥१४॥

अङ्गिनो हि शृङ्गारस्य ये उक्ताः प्रभेदास्तेषु सर्वेषु एकप्रकारानुबन्धितया प्रबन्धेन प्रवृत्तोऽनुप्रासो न व्यञ्जकः। अङ्गिन इत्यनेन अङ्गभूतस्य शृङ्गारस्य एकरूपानुबन्ध्यनुप्रासनिबन्धने कामचारमाह ॥

## EXPOSITION

§ 20 In the present section the Dhvanikara proposes to show in brief how the various figures of speech can be consistently brought into relation with रसध्वनि. He takes up शृङ्गार as the specimen and lays down certain principles that must be observed in introducing poetic figures in general in a *dhvani-kavya*, so that the aesthetic effect may be the highest

शृङ्गारस्य प्रकाशक —In all the five varieties of शृङ्गार where they are primarily developed ( अङ्गिन् ) and not subordinate, it might be laid down as a universal law that the figure of speech अनुप्रास ( *alliteration* ) based on the repetition of the same sound group ( i e if too much hackneyed ) is apt to be an impediment in the way of the proper development of the emotion, detracting as it does from the charm of the aesthetic relish Thus, in the case of शृङ्गार, long *alliterations* based on the repetition of the same letters or group of letters, must be carefully avoided But, short *alliterations* based on the repetition of varying groups of letters that do not unduly offend the sense of consistency and having some freshness in them, may be introduced without violating the norm laid down above As Abhinavagupta notes एकरूपत्वनुबन्ध त्यक्त्वा विभिन्नोऽनुप्रासो निबध्यमानो न दोषाय इत्येकरूपग्रहणम् ।[1]—Thus अनुप्रास generally is not a figure that can fit in happily with शृङ्गार

---

1. Kuntaka in his *Vakroktijivita* makes similar observations regarding अनुप्रास, यमक and other poetic figures :—

## TEXT

§२१। ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् ।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥१५॥

ध्वनेरात्मभूतः शृङ्गारस्तात्पर्येण वाच्य-वाचकाभ्यां प्रकाश्यमानस्तस्मिन् यमकादीनां यमकप्रकाराणां निबन्धनं दुष्कर-शब्द-भङ्गश्लेषादीनां शक्तावपि प्रमादित्वम्। प्रमादित्वमित्यनेन एतद् दर्श्यते—काकतालीयेन कदाचित् कस्यचिदेकस्य यमकादेर्निष्पत्तावपि भूम्नाऽलंकारान्तरवद् रसाङ्गत्वेन निबन्धो न कर्त्तव्य इति। 'विप्रलम्भे विशेषतः' इत्यनेन विप्रलम्भे सौकुमार्यातिशयः ख्याप्यते। तस्मिन् द्योत्ये यमकादेरङ्गस्य निबन्धो नियमान्न कर्त्तव्य इति ॥

## EXPOSITION

§ 21. In the poem where the emotion of शृंगार is preeminent, the poet is advised to carefully eschew such figures of speech as यमक, चक्रबन्ध, भङ्गश्लेष, etc. howsoever gifted he might be. प्रमादित्व . . . न कर्त्तव्य इति—Ānandavardhana here observes that solitary cases of यमक etc, if they come out spontaneously, are not ruled out hereby. The poet should only restrain his natural propensity towards introducing such difficult and obscure figures in *abundance* with a view to make a display of his own craftsmanship.

---

"नातिनिर्बन्धविहिता नाप्यपेशलभूषिता।
पूर्ववृत्तपरित्यागनूतनावर्त्तनोज्ज्वला ॥"—II. 1.

which has been explained in the *vṛtti* as follows :—निर्बन्धशब्दोऽत्र व्यसनितायां वर्त्तते। तेन अतिनिर्बन्धे पुन पुनरावर्त्तनव्यसनितया विहिता, अप्रयत्नविरचितेत्यर्थः। व्यसनितया प्रयत्नविरचने हि प्रस्तुतौचित्य-परिहाणे. वाच्यवाचकयो परस्परस्पर्धित्वलक्षणसाहित्यविरह स्यात्।.... पूर्वमावृत्ताना . . .-पुन पुनर्विरचितानां परित्यागेन प्रहाणेन नूतनानामभिनवाना वर्णानामावर्त्तनेन पुन पुन. परिग्रहेण च तदेवमुभाभ्यां प्रकाराभ्यामुज्ज्वला भ्राजिष्णु।—*Op. cit.*, p. 84.

विप्रलम्भे ... न कर्तव्य —This principle has to be more rigidly observed in the case of विप्रलम्भशृङ्गार, for it is the tenderest of all emotions, and any such obscure and difficult figure of speech as यमक etc. is sure to mar the sentiment completely. "दुष्कर—मुरज चक्रबन्धादि। शब्दश्लेष इति। अर्थश्लेषो न दोषाय रसस्त्व'मित्यादौ। शब्दभङ्गोऽपि विलष्ट एव दुष्ट, न रवशोकादौ"—*Locana* The following extract from the *Rasagangadhara* should be compared in this connexion :—

" ..... एव स्वप्रत्यय यडन्तानि यड्लुगन्तानि अन्यानि च शाब्दिकप्रियाण्यपि मधुररसे न प्रयुञ्जीत। एव व्यङ्ग्यचर्वणा-निरिक्तयोजनाविशेषापेक्षानापातोऽधिकचमत्कारिणोऽनुप्रासनिचयान् यमकादीश्च सभवतोऽपि कविर्न निबध्नीयात्। यतो हि ते रसचर्व-णायामनन्तर्भवन्त सहृदय-हृदय स्वाभिमुख विदधाना रसपराङ्मुखं विदधीरन्। विप्रलम्भे तु सुतराम्। यतो मधुरतमत्वेनास्य निर्मल-सितानिर्मित-पानकरसस्येव तनीमानपि स्वातन्त्र्यमावहन् पदार्थ. सहृदयहृदयारुन्तुदतया न सर्वथैव सामानाधिकरण्यमर्हति। यदाहु —'ध्वन्यात्ममूते शृङ्गारे'—इत्यादि। ये तु पुनरक्लिष्टतयाऽ-नुभतस्कन्धतया च न पृथग्भावनामपेक्षन्ते, कि तु रसचर्वणायामेव सुसुख गोचरीकर्तुं शक्या, न तेषामनुप्रासादीना त्यागो युक्त ।।'—*Op cit*, pp 88 89 Hemacandra in his *Kāvyānuśāsana* quotes the following *āryās* from a lost work of Bhatta-Lollata which read just like a commentary on the present *Kārikā*:—

"यस्तु सरिदद्रिसागर नग तुरग पुरादिवर्णने यत्न।
कविशक्तिख्यातिफलो विततधिया नो मत प्रबन्धेषु ।।
यमकानुलोम-तदितर-चक्रादिभिदोऽतिरसविरोधिन्य ।
अभिमानमात्रमेतद् गड्डरिकादिप्रवाहो वा ।।इति।।[1]

—*Op cit.*, p 215.

---

1. Namisadhu the commentator of Rudrata's *Kāvyālamkāra*

TEXT

§ २२। अत्र युक्तिरभिधीयते—

**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।**
**अपृथग्यत्न-निर्वर्त्यः सोऽलंकारो ध्वनौ मतः ॥१६॥**

निष्पत्तौ आश्चर्यभूतोऽपि यस्यालंकारस्य रसाक्षिप्ततयैव बन्धः शक्यक्रियो भवेत् सोऽस्मिन् अलक्ष्यक्रमव्यङ्ग्ये ध्वनौ अलंकारो मतः। तस्यैव रसाङ्गत्वं मुख्यमित्यर्थः। यथा—

कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति बाष्प स्तनतटीं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥

रसाङ्गत्वे च तस्य लक्षणमपृथग्यत्ननिर्वर्त्यत्वम् इति यो रसं बन्धुमध्यवसितस्य कवेरलंकारस्तां वासनामत्यूह्य यत्नान्तरमास्थितस्य निष्पद्यते, स न रसाङ्गमिति। यमके च प्रबन्धेन बुद्धिपूर्वकं क्रियमाणे नियमेनैव यत्नान्तरपरिग्रह आपतति, शब्दविशेषान्वेषणरूपः। अलंकारान्तरेष्वपि तत् तुल्यमिति चेत्, नैवम्। अलंकारान्तराणि हि निरूप्यमाणदुर्घटनान्यपि रससमाहितचेतसः प्रतिभानवतः कवेरहम्पूर्विकया परापतन्ति। यथा कादम्बर्यां कादम्बरीदर्शनावसरे। यथा च मायारामशिरोदर्शनेन विह्वलायां

---

cites the second *āryā* under III. 59, which runs as follows: "इति यमकमशेषमभ्यगालोच्य सद्भिः गुरुविभिरभियुक्तैस्तु चौचित्यवद्भिः । सुविहितपदभङ्गं सुप्रसिद्धाभिधानं तदनु विरचनीयं सर्गबन्धेषु भूम्ना ॥"—यमक-श्लेष-चित्राणि हि सरसे काव्ये क्रियमाणानि रसखण्डना कुर्युः । विशेषतस्तु शृङ्गार-करुणयोः । यतो हि एतानि शक्तिमात्रं पोषयन्ति, न तु रसवत्ताम् । यदुक्तम्—'यमकानुलोम—' इति । प्रयोगस्तु तेषां खण्डकाव्येषु देवतास्तुतिषु रणवर्णनेषु च ॥"

सीतादेव्यां सेतौ ।[1] युक्तं चैतत् । यतो रसा वाच्यविशेषैरेवाक्षेप्तव्याः । तत्प्रतिपादकैश्च शब्दैस्तत्प्रकाशिनो वाच्यविशेषा एव रूपकादयोऽलंकाराः । तस्मान्न तेषां बहिरङ्गत्वं रसाभिव्यक्तौ । यमक-दुष्करमार्गेषु तु तत् स्थितमेव । यत्तु रसवन्ति कानिचिद् यमकादीनि दृश्यन्ते, तत्र रसादीनामङ्गता यमकादीनां त्वङ्गितैव । रसाभासे चाङ्गत्वमप्यविरुद्धम् । अङ्गितया तु व्यङ्ग्ये रसे नाङ्गत्वं, पृथक्प्रयत्ननिर्वर्त्यत्वाद् यमकादेः ॥

## EXPOSITION

§ 22. The Dhvanikāra here lays down the criterion as to which अलंकार should be properly regarded as instrumental ( अङ्ग ) towards the development of the intended emotion A poetic figure for the improvisation (निर्वृत्ति) of which no additional effort is required on the part of the poet besides what is unavoidably necessary for the proper suggestion of the sentiment, which is the only end of his creative urge, can be truly regarded as *organically related* with the poetic art. Anything that cannot stand this test must be brushed aside as mere external appendages ( बहिरङ्ग ) Thus यमक, मुरजबन्ध, सभङ्गश्लेष etc can be improvised by the poet only after a good deal of contemplation and search after suitable words and meanings, which for the time being distracts his mind from the final aim in view—viz the suggestion of the requisite emotion

1. References are to Candrāpīḍa's first meeting with the Princess Kādambarī in Bāṇa's prose romance (*see* Peterson's Edn. of *Kādambarī*, pp. 186-189) and to Pravarasena's *Setubandha, Āśvāsa* XI (NSP Edn ), where Sītā swoons away at the sight of Rāma's severed head falsely presented by Rāvaṇa to convince Sītā of her lord's sad end.

(रसाभिव्यक्ति).[1] Thus, they should be discarded as extraneous elements, as far as possible. Abhinavagupta states that though it has been observed in the previous *kārikā* that यमक etc. are to be carefully avoided in the case of शृङ्गार alone, yet it is not the whole truth. They must be *universally* avoided irrespective of the nature of the emotion to be suggested. Compare: 'रसेति—रस-समवधानेन विभावादिघटनामेव कुर्वंस्तन्नान्तरीयकतया यमासादयति, स एवात्रालंकारो रसमार्गे, नान्यः। तेन वीराद्भुतादिरसेष्वपि यमकादि कवेः प्रतिपत्तुश्च रसविघ्नकार्येव सर्वत्र। गड्डरिकाप्रवाहोपहतसहृदयधुराधिरोहण-विहीनलोकावर्जनाभिप्रायेण तु मया शृङ्गारे विप्रलम्भे च विशेषत इत्युक्तमिति भावः। तथा च 'रसेऽङ्गत्वं तस्मादे । न विद्यते' इति सामान्येन वक्ष्यति।'—*Op. cit.*, pp. 219–20 Note also the following *kārikās* from Mahimabhaṭṭa's *Vyaktiviveka*, as they express the same idea as the present *kārikā* of the *Dhvanyāloka*—

"न चालंकारनिष्पत्त्यै रसबन्धोद्यताः कविः।
यतते ते हि तत्सिद्धिनान्तरीयकसिद्धयः॥
यतः—रसस्याङ्गं विभावाद्याः साक्षान्निष्पादयन्त्यतः।
तद्वैचित्र्यवोचितवपुषोऽलंकारास्तु तदाश्रयाः॥"—*Op. cit.*, *Vimarśa*, II. 75–76.

कपोले पत्राली..न तु वयम्—Comp. '*Locana*: करकिसलयन्यस्तवदना स्वागतान्ताधरा प्रवर्तमानबाष्पनिरुद्धकण्ठी अविच्छिन्नरुदित-भञ्चत्पृथुचलदा रोषमपरित्यजन्ती चाटुकतया यावत् प्रसाधित

---

1. Compare 'रसस्य परिपन्थित्वान्नालंकारः प्रहेलिका।
उक्तिवैचित्र्यमात्रं सा च्युतदत्ताक्षरादिका॥—
*Sāhityadarpaṇa*, X. 13.

Also—"एवं शब्दगतचित्रादिकमप्यूह्यम्। वाच्यालंकारप्रपञ्चनया तु नेह प्रपञ्च्यते।"—*loc. cit.*

तात्पर्येणाविप्रलम्भशृङ्गारानुभावचर्वणावहितचेतस एव वक्तुः श्लेषरूपकध्वनिरेखाद्या अयत्ननिष्पन्नास्तच्चर्वयितुरपि न रसचर्वणाविघ्नमादधतीति ॥—*Op cit*, p 220

'रसाङ्गत्वे ...न रसाङ्गम्'—The criterion as to whether a particular अलङ्कार is रसाङ्ग (conducive to the suggestion of the desired aesthetic emotion) or not, is whether it is produced by the same effort that is called forth for the suggestion of the emotion proper or not

अलङ्कारान्तरेष्वपि तत्स्थितमेव—One might, however, contend that poetic figures like समासोक्ति, अप्रस्तुत प्रशंसा etc, are no less difficult and intricate than यमक, सभङ्ग-श्लेष etc, and they require as much contemplation and effort on the part of the poet for their proper insertion in a *kavya* as the latter, that have been categorically tabooed from the scheme of aesthetic realisation. So there can be no reasonable basis to be found for this discriminatory treatment To this Ānandavardhana replies: True, the said figures are as much difficult and intricate as यमक, मुरजबन्ध etc Still, the former group differs from the latter in one important respect—viz while the former spring spontaneously in ceaseless succession from the fountain-head of the poet's imagination as he is absorbed in the contemplation of the emotion in question it is not so with the latter The figures of speech like रूपक, समासोक्ति अप्रस्तुतप्रशंसा etc, are nothing but turns of expression that convey the requisite meanings consisting of proper विभाव s अनुभाव s etc, that alone suggest the aesthetic emotion ('तत्' in तत्प्रतिपादकैश्च शब्दैः refers to the वाच्यविशेष, viz विभाव's अनुभाव s etc that constitute the particular import of words constituting a poetic expression or अलङ्कार, while the second तत्° in तत्प्रकाशिनः refers to रस in the preceding sentence.) Thus, they can no more be regarded as external appendages than the very thought itself of the poet The

poet's idea itself gushes forth couched spontaneously in those peculiar modes of expression which are called poetic figures or अलकार's and cannot be divested of the latter without being completely metamorphosed in the process Change the poetic figure and you make the poet say something quite different from what was originally intended by him Kuntaka admirably expresses this idea in the following extract from his *Vakroktijīvita* —

'अलङ्कृतिरलङ्कार्यमपोद्धृत्य विविच्यते ।
तदुपायतया तत्त्व सालङ्कारस्य काव्यता ॥

—अलङ्कृतिरलङ्करणम्, अलङ्क्रियते ययेति विगृह्य । सा विविच्यते विचार्यते । यच्चालङ्कार्यमलङ्करणीय वाचकरूप वाच्यरूप च तदपि विविच्यते । तयो सामान्यविशेषलक्षणद्वारेण स्वरूपनिरूपण क्रियते । कथम्—अपोद्धृत्य । निष्कृष्य पृथक्पृथगवस्थाप्य, यत्र समुदायरूपे तयोरन्तर्भावस्तस्माद् विभज्य । केन हेतुना—तदुपायतया । तदिति काव्य परामृश्यते । तस्योपायस्तदुपाय तस्य भावस्तदुपायता तया हेतुभूतया । तस्मादेवविधो विवेक काव्यव्युत्पत्त्युपायता प्रतिपद्यते । दृश्यते च समुदायान्त पातिनामसत्यभूतानामपि व्युत्पत्तिनिमित्तम् अपोद्धृत्य विवेचनम् । यथा—पदान्तर्भूतयो प्रकृति-प्रत्यययो वाक्यान्त-र्भूताना पदाना चेति । यद्येवम् असत्यभूतोऽप्यपोद्धारस्तदुपायतया क्रियते तत् कि पुन सत्यम् इत्याह । 'तत्त्व सालङ्कारस्य काव्यता' । अयमत्र परमार्थ —सालङ्कारस्य अलङ्करण-सहितस्य सकलस्य निरस्तावयवस्य सत समुदायस्य काव्यता कविकर्मत्वम् । तेनालङ्कृतस्य काव्यत्वमिति स्थिति, न पुन काव्यस्यालङ्कारयोग ॥' —*Op cit*, pp 6-7. Compare also the following *kārikās* from the same work of Kuntaka —

प्रतिभा प्रथमोद्भेदसमये यत्र वक्रता ।
शब्दाभिधेययोरन्त स्फुरतीव विभाव्यते ॥[1]

1. Compare *Vṛtti*. तदयमत्र परमार्थ —यत् कविप्रयत्ननिरपेक्षयारेव

अलंकारस्य कवयो यत्रालंकरणान्तरम् ।
असन्तुष्टा निबध्नन्ति हारादेर्मणिबन्धवत् ॥
रत्न-रश्मिच्छटोत्सेकभासुरैर्भूषणैर्यथा ।
कान्ताशरीरमाच्छाद्य भूषायै परिकल्प्यते ॥
यत्र तद्वदलंकारैर्भ्राजमानैर्निजात्मना ।
स्वशोभातिशयान्तःस्थम् अलङ्कार्यं प्रकाश्यते ॥
सोऽस्तिद्युसञ्चरो येन विदग्धकवयो गताः ।
खड्गधारापथेनेव सुभटानां मनोरथाः ॥—*Op cit*, I 34-37 & 43

यत्तु रसवन्ति ... अविरुद्धम्—There are, however, poetic compositions, rare though, where यमक, अनुप्रास etc, are met with and yet there is no appreciable loss of aesthetic charm Compare, for instance *Raghuvamsa* Canto IX[1] In Ānandavardhana's opinion, here, too it is the sound-effect due to यमक that is really more attractive and as such predominant (अङ्गिन्), while the emotion plays a subordinate role (अङ्ग). In the case of रसाभास, however, the introduction of यमक etc is not barred

अङ्गितया तु ...यमकादे—But where the element of emotion is pre-eminent, the poet should be well advised to totally avoid these figures of sound, that are detrimental to the successful development of sentiments in general

TEXT

§ २३ । अस्यैवार्थस्य संग्रहश्लोकाः—

रसवन्ति हि वस्तूनि सालंकाराणि कानिचित् । एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः ॥—*loc. cit*

1. Compare —उदाहरणान्यत्र निपुणतरमेव चतुर्थे सर्गे यमकानि यानि विरचितानि रघुवंशे वा यमकवर्ग—Kuntaka's *Vakroktijīvita*, *Vrtti* on II 6-7

रसवन्ति हि वस्तूनि सालंकाराणि कानिचित्।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः॥
यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते।
शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते॥
रसाभासाङ्गभावस्तु यमकादेर्न वार्यते
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते॥

EXPOSITION

§ 23 Ānandavardhana sums up the theme of the preceding sections in these mnemonic verses of his own

TEXT

§२४। इदानीं ध्वन्यात्मभूतस्य शृङ्गारस्य व्यञ्जकोऽलंकारवर्ग आख्यायते—

ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।
रूपकादिरलंकारवर्ग एति यथार्थताम्॥१७॥

अलंकारो हि बाह्यालंकारसाम्यादङ्गिनश्चारुत्वहेतुरुच्यते। वाच्यालंकारवर्गश्च रूपकादिर्यावानुक्तो वक्ष्यते च कैश्चित्, अलंकाराणामनन्तत्वात्, स सर्वोऽपि यदि समीक्ष्य विनिवेश्यते, तदलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरङ्गिनः सर्वस्यैव चारुत्वहेतुर्निष्पद्यते॥

EXPOSITION

§ 24 If poetic figures like रूपक etc which have already been noticed and defined by ancient writers like Bharata, Bhāmaha, Daṇḍin etc., as also others that might be improvised by future authors ( वक्ष्यते च कैश्चित् ), can become auxiliary (अङ्ग) towards the suggestion of the sentiment of love (शृङ्गार), if they are introduced after due reflection ( समीक्षा ) as to their appropriateness True, that Daṇḍin in his *Kāvyādarśa*

remarks that all *alamkāras* in general can add emotional grace to a piece of poetic composition ( 'कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति' ), yet his conception of *rasa* was widely divergent from the Dhvanikāra's. Moreover, he did not lay down any definite rules as regards the judicious introduction of poetic figures on particular occasions, as has been attempted by the Dhvanikāra here.

### TEXT

§ २५। एषा चास्य विनिवेशने समीक्षा—

विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन ।
काले च ग्रहण-त्यागौ नातिनिर्वहणैषिता ॥१८॥
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम् ।
रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम् ॥१९॥

रसबन्धेष्वत्यादृतमनाः कविर्यमलङ्कारं तदङ्गतया विवक्षति । यथा—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरम्
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥

अत्र हि भ्रमरस्वभावोक्तिरलङ्कारो रसानुगुणः ॥

### EXPOSITION

§ 25 Ānandavardhana in this section lays down certain principles that must be rightly kept in view by an aspiring poet if he desires to keep in tact the emotional effect. The first of these principles is: विवक्षा तत्परत्वेन नाङ्गित्वेन

कदाचन—The *alamkāra* must not be allowed to rival or transcend the charm of the aesthetic relish, and must always be kept subordinate to the latter, which is the very soul of a poetic composition To illustrate this, Ānandavardhana cites the verse 'चलापाङ्गां दृष्टिम्' etc The poetic figure here is स्वभावोक्ति, as Duṣyanta, who is the speaker, vividly describes the movements of the bee that hums and buzzes round Śakuntala's beautiful lotus-like face under the guise of a lover as it were

The poetic figure is quite in unison with the sentiment depicted here ( viz सभोग शृङ्गार ) that is predominantly suggested and as such can be truly called an *alamkāra* and not through courtesy alone As Abhinavagupta notes हे मधुकर, वयमेवंविधाभिलापचाटुप्रवणा अपि तत्त्वान्वेषणात् वस्तुवृत्तऽन्विष्यमाणे हता आयासमात्रपात्रीभूता जाता । त्व खलु इति निपातेन अयत्नसिद्ध तवैव चरितार्थत्वमिति शकुन्तला प्रत्यभिलाषिणो दुष्यन्तस्येयमुक्ति । तथाहि कथमेतदीयकटाक्षगोचरा भूयास्म, कथमेषा अस्मदभिप्रायव्यञ्जक रहोवचनमाकर्णयति, कथ तु हठादनिच्छन्त्या अपि परिचुम्बन विधेयास्मेति यदस्माक मनोराज्यपदवीमधिशेते तत्तवायत्नसिद्धम् । भ्रमरो नीलोत्पलधिया तदाशङ्काकरी दृष्टि पुन पुन स्पृशति । श्रवणावकाशपर्यन्तगामिनश्च नेत्रयोरुत्पलशङ्कानपगमात् तत्रैव ध्वन्यमान आस्ते । सहज सौकुमार्य-त्रास-चातरायाश्च रतिनिधानभूत विकसितारविन्दकुवलयामोदमधुरमधर पिबतीति भ्रमरस्वभावोक्तिरलङ्कारोऽङ्गतामेव प्रकृतरसस्योपगत । अन्ये तु भ्रमरस्वभावे उक्तिर्यस्य इति भ्रमरस्वभावोक्तिरत्र रूपकव्यतिरेक इत्याहु. ॥—°*Locana*, pp 224-225

TEXT

§ २६ । 'नाङ्गित्वेने'ति न प्राधान्येन । कदाचित् रसादितात-

पर्यायेण विवक्षितोऽपि ह्यलङ्कारः कश्चिदङ्गित्वेन विवक्षितो दृश्यते। यथा—

चक्राभिघातप्रसभाज्ञयैव[1] चकार यो राहुवधूजनस्य।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥

अत्र हि पर्यायोक्तस्य अङ्गित्वेन विवक्षा रसादितात्पर्ये सत्यपीति ॥

## EXPOSITION

§ 26. In this verse the figure of speech is पर्यायोक्त ( *see* notes on *Uddyota* I § 35 ), since the effect which has been *expressed* in words and the cause *implied* therefrom are both contextual (प्राकरणिक) Comp "'चक्राभिघाते'ति प्राचीनपद्ये राहुशिरश्छेदकारीति व्यङ्ग्यम् राहुवधूजनसंबन्धि चुम्बनमात्रावशिष्टरतोत्सवनिर्मातृत्वेन रूपेण प्रकारान्तरेणाभिधीयते इत्यस्यापि विवेचने क्रियमाणे राहुशिरश्छेदकर्तृत्वरूपो धर्मः स्वसमानाधिकरणेन तादृशरूपान्तरेण साक्षादुपात्तेन गम्यत इत्येव पर्यवस्यति।" —*Rasagangadhara* p 547 The poet intends to convey in this verse the divine prowess of Vasudeva, who cut off the head of the demon Rahu with his disc But it is the mode of expression that is more striking here

---

1 The original reading in Mentha's *Hayagrivavadha* a lost epic, from which the present verse is quoted was एकाभिघात° and not चक्राभिघात° which is merely an emendation based on misconception This is distinctly noticed by Ruyyaka in his commentary on Mahimabhatta's *Vyaktiviveka* Compare 'एकाभिघात-इति हयग्रीववधे पाठः स्थितः, गुरुजनस्य पुंलिङ्गस्य प्रक्रान्तत्वात् 'य' इत्यनेन परामर्शात्। तत्तु अनवबुध्य तत्र यदि परामृश्यते, तदा मध्यमस्य नपुंसकता स्यात्। तन्मुरारिस्थाने परामृश्यते इत्यादयः 'चक्राभिघाते'ति पठन्ति। न त्वयं तत्र प्रकारः ॥—p 272

As Ānandavardhana states : अत्र हि पर्यायोक्तस्य....सत्यपीति Compare °*Locana* अत्राह कश्चित्—'पर्यायोक्तमेवात्र कवे प्राधान्येन विवक्षितम्, न तु रसादि। तत् कथमुच्यते रसादितात्पर्ये सत्यपी'ति। नैवम् ; वासुदेवप्रतापो ह्यत्र विवक्षितः। स चात्र चारुत्वहेतुतया न चकास्ति, अपि तु पर्यायोक्तमेव ॥—*Op cit*, p 225

TEXT

§ २७। अङ्गत्वेन विवक्षितमपि यमवसरे गृह्णाति, नानवसरे। अवसरे गृहीतिर्यथा—

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोप-विपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥

—इत्यत्र उपमा-श्लेषस्य।

गृहीतमपि च यमवसरे त्यजति तद्रसानुगुणतयाऽलंकारान्तरापेक्षया। यथा—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्तास्तथा मामपि।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक ! केवलमहं धात्रा सशोकः कृतः ॥

—अत्र हि प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानो रसविशेषं पुष्णाति ॥

EXPOSITION

§ 27. In this section Ānandavardhana explains the portion 'काले च ग्रहणत्यागौ' in the *Kārikā* 18. The poet should retain ( ग्रहण ) or reject ( त्याग ) a particular अलंकार according as it enhances or deters the development of the

principal emotion. Ānandavardhana illustrates the first variety in the verse 'उद्दामोत्कलिकाम्—' (*Ratnāvalī*). Here the figure is उपमा-श्लेष (i.e. *Simile* based on *double entendre*) and the occasion of the employment of this figure is in keeping with the sentiment of ईर्ष्याविप्रलम्भ which it is the object of the poet to suggest. Compare *Locana*: उद्दामा उद्गता कलिका यस्याः। उत्कलिकाश्च रुहरुहिकाः। क्षणात् तस्मिन्नेवावसरे प्रारब्धा जृम्भा विकासो यया। जृम्भा च मन्मथकृतोऽङ्गमर्दः। श्वसनोद्गमर्वसन्तमारुतोल्लासैरात्मनो लतालक्षणस्य आयाममायासनमान्दोलनयत्नमातन्वतीम्। निःश्वासपरम्पराभिश्च आत्मन आयास हृदयस्थित सन्तापमातन्वती प्रकटीकुर्वाणाम्। सह मदनाख्येन वृक्षविशेषेण, मदनेन कामेन च। अत्र उपमाश्लेष ईर्ष्याविप्रलम्भस्य भाविनो मार्गपरिशोधकत्वेन स्थितस्तच्चर्वणाभिमुख्य कुर्वन् अवसरे रसस्य प्रमुखीभावादशाया पुरःसरायमाणो गृहीत.—इति भाव ॥—*Op. cit.*, p 226 As an example of rejection (त्याग) according to the exigency of the occasion Ānandavardhana cites 'रक्तस्त्वं नवपल्लवै.'[1] 'अत्र हि... पुष्णाति'—In the first three feet of the verse the figure is हेतुश्लेष (i.e. काव्यहेतु based on श्लेष), but in the last hemistich, this figure has been abandoned by the poet in favour of the figure of speech व्यतिरेक, which is more capable of suggesting the mood of विप्रलम्भशृङ्गार than the former Compare *Locana*: रक्ता लोहित.। अहमपि प्रवृद्धानुराग। अत्र च प्रबोधको विभाव.

---

1. 'सीतावियोगोपनतविमस्मृत्यावस्थस्य दाशरथेरियमुक्ति —Hemcandra's *Viveka* on his *Kāvyānuśāsana* ' मामाहु पृथिवीभुजामधिपतिं नागाधिराजा भवान्, अव्युच्छिन्नपृथुप्रवृत्ति भवतो दान ममाप्यर्थिषु। स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेय वशा, सर्वं मामनु ते प्रियाविरहजा त्व तु व्यथा नानुभू ॥" —*Vikramorvaśī*, Act IV, is a close parallel of the verse cited in the *Vṛtti*

तदीयपल्लवराग इति मन्तव्यम् । एव प्रतिपाद्यमानोऽर्थो विभावत्वेन व्याख्येय । अत एव हेतुश्लेषोऽयम् । सहोक्त्युपमाहेत्वलकाराणा हि भूयसा श्लेषानुग्राहकत्वम् । अनेनैवाभिप्रायेण भामहो न्यरूपयत्— 'तत्सहोक्त्युपमाहेतुनिर्देशात् त्रिविधम्'--इत्युक्त्या, न तु अन्यालंकारानुग्रहनिराचिकीर्षया । रसविशेषमिति विप्रलम्भम् । सशोकशब्देन व्यतिरेकमानयता शोकसहभूताना निर्वदचिन्तादीना व्यभिचारिणा विप्रलम्भपरिपोषकाणामवकाशो दत्त ।'—*Op cit*, pp 227-238

The verse has been quoted by Jagannatha in his *Rasagangadhara* under the section on व्यतिरेक He criticises Appayya Dikṣita, who in his *Kuvalayananda*, refers to the Dhvanikāra's remarks on this verse (as recorded in this section), which seem to have been much misrepresented by him in the heat of the controversy Compare —

"यदपि कुवलयानन्दकृताऽलंकारसर्वस्वोक्तार्थानुवादकेन न्यूनतायामुदाहृतम्— 'रक्तस्त्व नव पल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै —' इत्यत्र सशोकत्वेन अशोकापेक्षयाऽपकर्ष पर्यवस्यति इति, तदपि चिन्त्यम् । रत्याद्यनुकूलतया कुतश्चिदङ्गाद् भूषणापसारण यथा शोभाविशेषाय भवति, एव प्रकृत उपमालंकारदूरीकरणमात्रमेव रसानुगुणतया रमणीयम्, न व्यतिरेक । अत एव अरामालंकार प्राञ्चो न मन्यन्ते अन्यथा तदालंकारान्तरतया तत्स्वीकारापत्ते । अत एव ध्वनिकृता सहृदयधुरन्धरेण 'सुकवियु रसानुसारेण क्वचिदलंकारसंयोग क्वचिदलंकारवियोग च कुर्यात्' इत्युक्त्वा 'रक्तस्त्वम्' इति पद्य सादृश्यदूरीकरणे उदाजह्रे ।' —*Op cit*, pp 475-76[1]

---

1 But compare Nagoji Bhaṭṭa's arguments in defence of Appayya Dikṣita's view अत्रेद चिन्त्यम्—उपमानाद्धि उपमेयस्योपमान वैलक्षण्यमेव गुणाधिक्यकृत व्यतिरेक । तच्च यत्किंचिदुपमेयोत्कर्षपर्य-

## TEXT

§ २८ । नात्रालंकारद्वयसन्निपातः । किं तर्हि ? अलंकारान्तरमेव श्लेष-व्यतिरेकलक्षणं नरसिंहवद् इति चेत्, न। तस्य प्रकारान्तरेण व्यवस्थापनात्। यत्र हि श्लेषविषय एव शब्दे प्रकारान्तरेण व्यतिरेक-प्रतीतिर्जायते, स तस्य विषयः। यथा—'स हरिर्नाम्ना देवः सहरिर्वरतुरगनिवहेन' इत्यादौ। अत्र हि अन्य एव शब्दः श्लेषस्य विषयोऽन्यश्च व्यतिरेकस्य। यदि चैवंविधे विषयेऽलंकारान्तरत्वकल्पना क्रियते, तत् संसृष्टेर्विषयापहार एव स्यात्। श्लेषमुखेनैवात्र व्यतिरेकस्यात्मलाभ इति नायं संसृष्टेर्विषय इति चेत्, न। व्यतिरेकस्य प्रकारान्तरेणापि दर्शनात्। यथा—

नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि शम्या
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमःकज्जलेन ।
प्राप्तोत्पत्तिः पतङ्गात् न पुनरुपगता मोषमुष्णत्विषो वो
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ॥

नात्र श्लेषमात्राच्चारुत्वप्रतीतिरस्तीति श्लेषस्य व्यतिरेकाङ्गत्वेनैव

---

यत्रापि, यत्र चित्तदयपर्यवसायि, यत्र विशदनुभवपर्यवसायि । आधिक्य न्यूनत्व-भावावपि उत्कर्षापकर्षपरौ एव । तत्र अपकर्षपर्यवसायि [illegible] । अत्र उपमेये [illegible] [illegible] [illegible] च [illegible] [illegible] [illegible] विरहि-[illegible] न पुन [illegible] इति [illegible] विरहानुगुण [illegible] पर्यवस्यति । अत एव [illegible] [illegible] इति [illegible] । [illegible] उदाहृते-[illegible] । [illegible] रसास्वादविघ्नं [illegible] [illegible] ॥—*loc. cit.*

विवक्षितत्वात्, न स्वतोऽलंकारता इत्यपि न वाच्यम्। यत एवंविधे विषये साम्यमात्रादपि सुप्रतिपादिताच्चारुत्वं दृश्यत एव। यथा—

> आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि
> स्तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः।
> अन्तर्मे दयितामुखं तव शशी वृत्तिः समैवावयो
> स्तत् किं मामनिशं सखे जलधर! त्वं दग्धुमेवोद्यतः॥

—इत्यादौ॥

## EXPOSITION

§ 28 नात्रालङ्कार चेत—Now it might be argued that in the verse रक्तस्त्वम— there are *not two* independent figures viz श्लेष *and* व्यतिरेक, as shown presently but there is only *one* figure of speech which is श्लेष व्यतिरेक (सङ्कर) quite different from the former So it cannot be stated that श्लेष has been rejected in favour of व्यतिरेक, for it presupposes the existence of two independent figures a false assumption Compare *Locana*— 'किं नहींति। सङ्करालङ्कार एवायम्, तत्र किं वा त्यक्तं किं वा गृहीतमिति परस्याभिप्राय ॥'

न इत्यादौ—Ānandhavardana now defines the scope of सङ्कर proper and distinguishes it from a case where श्लेष *and* व्यतिरेक are both independent figures When both श्लेष and व्यतिरेक coinhere in the same substratum ( *word unit* ), then and then only can there be a genuine case of सङ्कर But when the substrata of the two figures are different they should be regarded as two independent figures and not the constituents of a *tertium quid* viz सङ्कर For example 'सहरि निवहेन is an instance of श्लेषव्यतिरेक (सङ्कर) since the expression सहरि which is श्लिष्ट is the substratum

of व्यतिरेक too Comp °*Locana* तस्येति सङ्करस्य । एकत्र हि विषयेऽलङ्कारद्वयप्रतिभोल्लास सङ्कर । सहरिशब्द एको विषय स हरि, यदि वा सह हरिभि सहरिरिति ॥"—p 228 Thus it is really an example of एकवाचकानुप्रवेशसङ्कर [1]

अत्र हि व्यतिरेकस्य—But in the instance cited in the *Vrtti* —viz 'रक्तस्त्वम्— etc, the two figures श्लेष and व्यतिरेक do not coinhere in the same substratum. Thus श्लेष belongs to such words as रक्त, शिलीमुख etc while the apprehension of व्यतिरेक is given rise to by the terms सनाथ and सशोक So it cannot be called a case of एकवाचकानुप्रवेशसङ्कर ' अत्र हीति । हिशब्दस्तुशब्दस्यार्थे । 'रक्तस्त्वम् इत्यत्र यथं । अन्य इति—रक्त इत्यादि । अन्यश्च अशोक सशोकादि ।—°*Locana* यदि च स्यात्—Now, it might be contended that if the whole verse constituting a sentence be taken as *one single unit* instead of such discrete words as रक्त, सनाथ etc, both श्लेष and व्यतिरेक can be looked upon as coinhering in the same substratum and the verse रक्तस्त्वम्— would be an instance of श्लेष-व्यतिरेक सङ्कर Ānandavardhana argues that such a contention would leave no scope for संसृष्टि where two or more figures come together independent of one another, for all such cases would be comprehended under सङ्कर [2] As °*Locana* observes 'नत्वेवं वाक्यात्मक विषयमाश्रित्य एकविषय त्वाद् अस्तु सङ्कर इत्याशङ्क्याह यदीति । एवंविध वाक्यलक्षण विषये । विषय उत्यत्त्व विवक्षित वाच्यम । एकवाक्यापेक्षया यद्येकविषयत्वमुच्यते, तत्र क्वचित् संसृष्टि स्यात् सङ्कर स्यात् स्यात् ॥ —p 229

---

1 Compare सङ्करस्य विषय ........ । ........ Adyaprakāśa \ 141

2 For the difference between सङ्कर and संसृष्टि see our notes on *Uddyota* I Sec. §36

श्लेषमुखेनैवात्र दर्शनात् —Having refuted the view that 'रक्तस्त्वम्— is an instance of एकवाचकानुप्रवेसकर Ānandavardhana proceeds to confute the view that it is an illustration of अनुग्राह्यानुग्राहकभावसकर Others might argue that the figure of speech व्यतिरेक is based on उपमा, and as in the present verse the व्यतिरेक in the last foot [redacted] *based* on श्लेषोपमा, the latter is the cause of the former, and the relation of अङ्गाङ्गिभाव or अनुग्राह्यानुग्राहकभाव subsists between them So it is a case of श्लेष व्यतिरेक सकर of the अङ्गाङ्गिभाव variety Ānandavardhana replies that this argument is not reasonable For, though व्यतिरेक must be based on उपमा, still there is no hard and fast rule that the *similarity* must be explicitly stated in so many words It might as well be implied and hidden in the background [1] So, though in the verse cited in the *Vrtti* उपमा based on श्लेष is expressed in the opening lines, yet that particular उपमा should not be regarded as forming the basis of the व्यतिरेक of the last line Compare *Locana* ननूपमागर्भो व्यतिरेक, उपमा च श्लेषमुखेनैवायातेति श्लेषोऽत्र व्यतिरेकस्यानुग्राहक इति सङ्करस्यैव विषय । यत्र तु अनुग्राह्यानुग्राहक भावो नास्ति तत्र एकवाक्यगामित्वेऽपि संसृष्टिरेव । तदेतदाह—किं सर्वत्र उपमाया स्वशब्देनाभिधाने व्यतिरेको भवति, उत गम्यमानत्वे । तत्राद्य पक्ष दूषयति—प्रकारान्तरेणेति । उपमाभिधानेन विनापि इत्यर्थं ॥—*Op cit*, p 229. Ānandavardhana illustrates this by citing the verse 'नो कल्पापायवायो —' (Mayura's *Suryasataka*) Here he contrasts the flickering flame of an ordinary lamp with the luminous and inextinguishable blaze of the solar orb It is an instance of व्यतिरेक, but no similarity [redacted] *expressed* at all

---

1 Compare : शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयो ।
तत्र यद् भेदकथन व्यतिरेक स उच्यते ॥

As Ānandavardhana notes: अत्र हि ...दर्शितः. Compare *Locana*: शम्या शमयितुं शक्या इत्यर्थः। दीपवर्तिस्तु वायुमात्रेण शमयितुं शक्यते। तम एव कज्जलं तेन। न नो रहिता अपितु रहितैव। दीपवर्तिस्तु तमसाऽपि युक्ता भवति, अत्यन्तमप्रकटत्वात् कज्जलेन च उपरिचरेण। पतङ्गात् अर्कात्। दीपवर्तिः पुनः शलभाद् ध्वसते, नोत्पद्यते। साम्येति। साम्यस्य उपमायाः प्रपञ्चेन प्रबन्धेन यत् प्रतिपादनं स्व-शब्देन तेन विनापीत्यर्थः। एतदुक्तं भवति—प्रतीयमानैव उपमा व्यतिरेकस्य अनुग्राहिणी भवन्ती नाभिधानं स्वकण्ठेनापेक्षते। तस्मात्र श्लेषोपमा व्यतिरेकस्य अनुग्राहित्वेन उपात्ता॥—p. 230.

नात्र . दृश्यत एव—But, inspite of all that has been said in favour of श्लेष being an independent figure, the opponents might persist that though in other cases श्लेषोपमा might be considered in detachment from व्यतिरेक, yet in the present case श्लेषोपमा is the अङ्ग ( being the cause ) of व्यतिरेक, as there is no charm due to the former and consequently it would be a case of अङ्गाङ्गिभावसङ्कर. Ānandavardhana demurs that श्लेषोपमा has its own beauty, and should be regarded as an *independent* figure and not merely a constituent element of व्यतिरेक. He quotes the verse—'आक्रन्दाः स्तनितैः—' to illustrate that in the case of व्यतिरेक, उपमा alone ( without any touch of श्लेष ) can enhance the beauty of a poem ; and there is no gainsaying the fact that उपमा based on श्लेष would be more charming still. Compare *Locana*: "यद्यप्यन्यत्र नैव, तथापीह तत्प्राधान्येनैव सोपात्ता ; तदप्राधान्ये स्वयं चारुत्वहेतुत्वाभावात्—इति श्लेषोपमाऽत्र पृथगलङ्कारभावमेव न भजते। तदाह-नात्रेति। एतच्चासिद्ध स्व-संवेदनबाधितत्वादिति हृदये गृहीत्वा स्वसंवेदनमपह्नुवानं परं श्लेषं विना उपमामात्रेण चारुत्वसम्पन्नमुदाहरणान्तरं दर्शयन् निरुत्तरीकरोति—यत् इत्यादिना।" —p. 231.

### TEXT

§२९। रसनिर्वहणैकतानहृदयो यं च नात्यन्तं निर्वोढुमिच्छति। यथा—

कोपात् कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन्॥

अत्र हि रूपकमाक्षिप्तमनिर्व्यूढं च परं रसपुष्टये॥

### EXPOSITION

§ 29. Ānandavardhana now explains the hemistich 'नातिनिर्वहणैषिता': "एवं ग्रहणत्यागौ समर्थ्य 'नातिनिर्वहणैषिता' इति भागं व्याचष्टे—रसेति।"—*Locana. The poet should not carry a particular figure to its logical extreme (निर्वहण), if the emotional effect be hampered thereby. Thus, in the verse quoted the slender arm has been likened to 'a creeper'; but the poet has stopped there, without availing himself of the implications of that super-imposition, which if worked out logically in all its details would have demanded the further superimposition of व्याधवधू on दयिता, of कारागारपञ्जर on वासगृह, a process contrary to the dictates of all good sense and propriety. Thus, the रूपक has been *arrested*, in conformity with the prevailing sentiment of शृङ्गार. Compare: "बाहुलतिकायाः बन्धनीयपाशत्वेन रूपणं यदि निर्वाहयेत्, दयिता व्याधवधूः, वासगृहं कारागार-पञ्जरादीति परमनौचित्यं स्यात्"—

*Locana, p. 232.

### TEXT

§ ३०। निर्व्योढुमिष्टमपि यं यत्नादङ्गत्वेन प्रत्यवेक्षते। यथा—

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते भीरु ! सादृश्यमस्ति ॥

स एवमुपनिबध्यमानोऽलंकारो रसाभिव्यक्तिहेतुः कवेर्भवति । उक्तप्रकारातिक्रमे तु नियमेनैव रसभङ्गहेतुः सम्पद्यते । लक्ष्यं च तथाविधं महाकविप्रबन्धेष्वपि दृश्यते बहुशः । तत्तु सूक्तिसहस्रद्योतितात्मनां महात्मनां दोषोद्घोषणम् आत्मन एव दूषणं भवतीति न विभज्य दर्शितम् । किं तु रूपकादेरलंकारवर्गस्य येयं व्यञ्जकत्वे रसादिविषये लक्षणदिग् दर्शिता तामनुसरन् स्वयं चान्यत् लक्षणमुत्प्रेक्षमाणो यद्यलक्ष्यक्रमप्रतिभमनन्तरोक्तमेवं ध्वनेरात्मानमुपनिबध्नाति सुकविः समाहितचेतास्तदा तस्यात्मलाभो भवति महीयानिति ॥

## EXPOSITION

§ 30 In this section Ānandavardhana explains the *Kārikā*-portion 'निर्व्यूढावपि . वेक्षणम्'—The *alaṃkāra*, even though carried out to its logical extreme, must be subordinate to the principal sentiment. In the verse 'श्यामास्वङ्ग—'(*Meghaduta*, 109), the figure of speech उत्प्रेक्षा has been effectively carried out to the very end by the poet and yet that does not run counter to the prevailing mood (i e विप्रलम्भ शृङ्गार) Compare *Locana* निर्व्यूढुमिति । निःशेषेण परिसमापयितुमित्यर्थः । श्यामासु प्रियङ्गुलतासु पाण्डिम्ना तनिम्ना कण्टकितत्वेन च योगात् । शशिनि इति पाण्डुरत्वात् । उत्पश्यामि यत्नेनोत्प्रेक्षे । जीवितसंधारणायेत्यर्थः । हन्तेति कष्टम् । एकस्यसादृश्याभावे हि दोलायमानोऽहं सर्वत्र स्थितो न कुत्रचित् एकस्य धृतिं लभे इति भाव । भीरु इति । यो हि कातरहृदयो भवति नासौ सर्वत्र-

मेकस्य धारयतीत्यर्थः । अत्र हि उत्प्रेक्षायास्तदभावाध्यारोपरूपाया अनुप्राणक सादृश्य यथोपक्रान्तं तथा निर्वाहितमपि विप्रलम्भरस-पोषकमेव जातम् ॥—*Op. cit*, p 233

स एवम् . दर्शितम्—If the principles formulated above be properly observed by a poet, the poetic figures would uniformly turn out to be important accessories towards the development of the sentiments in view. Otherwise, the *alamkāras* do only mar the charm of the aesthetic relish There are numerous instances in the works of great poets, that can serve as illustrations of the breach of these poetic norms But Ānandavardhana, *out of intrinsic modesty and respect* for genius, desists from citing the counter-examples (प्रत्युदाहरण) As he remarks : 'तत्तु सूचित . दूषण भवति'.[1] Hemacandra, the great Jaina teacher, however, records in his *Kāvyānuśāsana* instances to illustrate the violation of these principles The relevant extracts are given below from that treatise :—

"तत्र रसोपकारप्रकारानाह—

**तत्परत्वे काले ग्रहत्यागत्योः नातिनिर्वाहेऽप्यङ्गत्वे रसोपकारिणः॥**

अलङ्कारा इति शेषः । तत्परत्व रसोपकारकत्वेनालङ्कारस्य प्रवेश, न बाधकत्वेन, नापि ताटस्थ्येन । यथा—'चलापाङ्गा'-मित्यादि । बाधकत्वेन यथा—

'स्रस्त स्रग्दामशोभा त्यजति विरचितामाकुल. केशपाश.
क्षीवाया नूपुरौ च द्विगुणतरमिमौ क्रन्दत. पादलग्नौ ।
व्यस्त. कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्या.
क्रीडन्त्या पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥'

---

1. Cp न केवल यो महतोऽपभाषते
शृणोति तस्मादपि य स पापभाक् ॥—*Kumārasambhava*, Canto V

—अत्र पीडयेवेत्युत्प्रेक्षालंकारोऽङ्गी सन् तदनुग्राहकश्चार्थश्लेषः करुणोचितान् विभावानुभावान् संपादयन् वाचकत्वेन भातीति न प्रकृतरसोपकारी ॥ ताटस्थ्येन यथा—

'लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥'

पुलहक-लिखित-सागरिका-प्रतिबिम्बदर्शनाभिजाताभिलापस्य वत्सराजस्येयमुक्तिः तटस्थस्येव कविनोपरचितेति श्लेषानुगृहीतोपमालंकारप्राधान्येन प्रस्तुतो रसो गुणीकृतोऽपरिजिघटिषया ॥

अङ्गत्वेऽपि कालेऽवसरे ग्रहणं यथा—'उद्दामोत्कलिकाम्—' इति । न त्वेव यथा—

'वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥'

अत्र वाताहारत्व पदार्थाद् वाच्यमपि आदौ उक्तम् इत्यतिशयोक्तिरनवसरे गृहीता । तथाहि प्रथमत एव प्रथमपादे हेतूत्प्रेक्षया यदतिशयोक्तेरुपादानं, न तत् प्रकृतस्य दम्भप्रकर्षप्रभावतिरस्कृतगुणगणानुशोचनमयस्य निर्वेदस्य अङ्गतामेति । नहि वाताहाराद्धिको दम्भस्तोयकणव्रतं, नापि ततोऽधिकं दम्भनत्वं मृगाजिनवसनमिति ॥ गृहीतस्यावसरे त्यागो यथा— 'रक्तस्त्व'-मिति ॥ न त्वेव यथा—

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग् वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥

अत्र 'न रावण'-इत्यस्मादेव त्यागो युक्तः । तथाहि रावण इत्येतज् जगदाक्रन्दकारित्वाद्यर्थान्तरं प्रतिपादयज्जनकस्य धर्मवीरं प्रत्यनुभावता

प्रतिपाद्यते । ऐश्वर्यं पाण्डित्यं परमेशभक्तिर्देशविशेषोऽभिजनइत्येतत् सर्वं लोकमपबाधमानस्य अधर्मपरस्य नार्थक्रियाकारकमिति तावतोऽर्थस्य तिरस्कारकत्वेनैव रावणचेष्टितं निर्वाहणीयम्। यत्तु अन्यदुपात्तं 'क्व नु पुन'रिति तद्यदि ससंदेहत्वेन योज्यतेऽथाक्षेपत्वेन अथापि 'नेदृग्वरो लभ्यते' इत्यर्थान्यरन्यासत्वेन तथापि प्रकृतस्य धर्मवीरस्य न कथंचित् निर्वाहः ॥

नात्यन्तं निर्वाहो यथा –

'कोपात् कोमले'ति ।....न त्वेवं यथा—

'सञ्चितपक्ष्मकपाटं नयनद्वारं स्वरूपताडनेन ।
उद्घाट्य सा प्रविष्टा देहगृहं सा हृदयचौरी ॥'

—अत्र नयनद्वारमित्येतावदेव सुन्दरं शृङ्गारानुगुणं, न त्वन्यद्रूपणम् ॥
निर्वाहेऽप्यङ्गत्वं यथा—'श्यामास्वङ्गमिति' ।....न त्वेवं यथा—

'न्यञ्चत् कुञ्चितमुत्सुकं हसितवत् साकूतमाकेकरं
व्यावृत्तं प्रसरत् प्रसादि मुकुलं सप्रम कम्प्रं स्थिरम् ।
उद्भ्रु भ्रान्तमपाङ्गवृत्ति विकचं मज्जत्तरङ्गोत्तरं
चक्षुः साश्रु च वर्तते रसवशादेकैकमन्यक्रियम् ॥'

अत्र रावणस्य दृग्विंशतो वैचित्र्येण स्वभावोक्तिर्निर्वाहिताऽपि रसस्य अङ्गत्वेन न योजितेति ॥—*Op. cit.*, pp. 17-22.

TEXT

§ ३१ । क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसंनिभः ।
शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः ॥१०॥

अस्य विवक्षितान्यपरवाच्यस्य ध्वनेः संलक्ष्यक्रमव्यङ्ग्यत्वादनुरणनरूपो य आत्मा सोऽपि शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्विप्रकारः ॥

## EXPOSITION

§31 Having thus discussed the nature of असंलक्ष्य-क्रम ध्वनि in all its details, Ānandavardhana proposes to deal with the other variety of विवक्षितान्यपरवाच्यध्वनि—viz संलक्ष्यक्रमध्वनि, also called अनुस्वान-संनिभ ध्वनि The name is significant in so far as the sequence between the apprehension of the expressed and the suggested senses is distinctly noticeable, just as the sequence between the first sound and the vibrations thereof is noticeable when a bell is rung This संलक्ष्यक्रम-ध्वनि again has two main divisions according as it is based on *formal suggestiveness* (शब्दशक्तिमूल°) or *material suggestiveness* ( अर्थशक्तिमूल° ) Compare *°Locana* —

"एवं विवक्षितान्यपरवाच्यध्वनेः प्रथमं भेदमसंलक्ष्यक्रमं विचार्य द्वितीयं भेदं विभक्तुमाह—क्रमेणेत्यादि। अत्र रणितादनुरणनभागो हेतुत्वेनोपात्तः। घण्टाया अनुरणनमभिघातजशब्दापेक्षया क्रमेणेव भाति। सोऽपीति। न केवलं मूलतो ध्वनिर्द्विविधः। नापि केवलं विवक्षितान्यपरवाच्यो द्विविधः। अयमपि द्विविध एवेत्यपिशब्दार्थः॥"
*Op cit*, pp 234-35

## TEXT

§ ३२। ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते, तदिदानीं श्लेषस्य विषय एवापहृतः स्यात्। नापहृत इत्याह—

आक्षिप्त एवालंकारः शब्दशक्त्या प्रकाशते।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥२१॥

यस्मादलंकारो न वस्तुमात्रं यस्मिन् काव्ये शब्दशक्त्या प्रकाशते स शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितम्। वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः। यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥

## EXPOSITION

§ 32 When a homonymous word ( अनेकार्थशब्द ) is used to denote more than one sense—one of which is प्रकृत (*i.e.* contextual ) and the other अप्रकृत, the former alone is conveyed through the primary function or *Denotation* (अभिधा-व्यापार ), while the latter is comprehended through suggestion ( व्यञ्जना ). The अप्रकृत sense cannot be conveyed through the self-same function of *denotation*, because the *context* ( प्रकरण ) is one of the restrictive factors enumerated by Bhartṛhari, that delimit the scope of *denotation* to the field of *the contextual sense* alone, where the conventional meanings (शब्दार्थ) are many and consequently *indeterminable* (अनवच्छेद). In such cases the word-element is the most important factor, since the substitution of any other synonymous word for that particular word in question will fail to give rise to the cognition of the अप्रकृत - sense. Now, it might be asked : 'What is the difference between श्लेष and शब्द-शक्तिमूलध्वनि ? In both the cases we have homonymous words ( अनेकार्थ-शब्द ), and the apprehension of more than one sense therefrom. So what is the reason for differentiating them as two distinct categories ? What more, if in such cases we posit शब्दशक्तिमूलध्वनि instead of श्लेष, there would be left no exclusive scope for the latter. As Ānandavardhana puts it : 'ननु ...अपहृत. स्यात्—'. The Dhvanikāra has answered this contention in the present *Kārikā* : 'आक्षिप्तः....हि सः'—True, that in शब्दशक्तिमूलध्वनि, as in श्लेष, we have the apprehen-

sion of more than one sense But, while in the former we have in addition, the apprehension of an unexp essed *poetic figure* ( अलङ्कार ) *quâ* *some definite relation like* सादृश्य *etc* subsisting between the two senses ( *viz.* the primary and the suggested ), in the latter no such relation is cognised And this constitutes the essential difference between the two categories ( viz श्लेष and शब्दशक्तिमूलध्वनि ) In श्लेष two or more senses are realised—*minus* that *unexpressed* relation that constitutes the link between the two discrete meanings As Ānandavardhana observes यस्मादलङ्कारो श्लेष —As *an illustration of* श्लेष, *when two unrelated facts alone are* comprehended he cites the verse 'येन ध्वस्तमनोभवेन— This is an adoration to Śiva and Viṣṇu simultaneously Compare

°*Locana* येन ध्वस्त बालक्रीडायामात्मन शकटम् । अभवेन अजेन सता । बलिनो दानवान यो जयति तादृग येन कायो वपु पुराऽमृत-हरणकाले स्त्रीत्व प्रापित । यश्चोद्वृत्त समद कालियाख्य भुजङ्ग हतवान् । रवे शब्दे लयो यस्य । 'अकारो विष्णु '—इत्युक्ते । यश्चाग गोवर्धनपर्वत गा च भूमि पातालगताम अधारयत । यस्य च नाम स्तुत्यमृषय आहु । कि तत ? शशिन मथ्नाति इति शशिमथ्—राहु, तस्य शिरोहरो मूर्धापहारक इति । स त्वा माधवो विष्णु सर्वदा पायात् । कीदृक् ? अन्धकनाम्ना जनाना येन क्षयो निवासो द्वारकाया कृत । यदि वा गोकुले इत्यीकाभिस्तेषा क्षयो विनाशो येन कृत ॥ द्वितीयोऽर्थ —येन ध्वस्त-कामेन सता बलिजितो विष्णो सम्बन्धी काय पुरा त्रिपुरनिर्दहनावसरेऽस्त्रीकृत शरश्च नीत । उद्वृत्ता भुजङ्गा एव हारा वलयाश्च यस्य, गङ्गा च योऽधारयत् । यस्य च शशिमत् चन्द्रयुक्त शिर आहु । हर इति च यस्य नाम स्तुत्यमाहु । स भगवान् स्वयमेव अन्धकासुरस्य विनाशकारी त्वा सर्वदा सर्वार्थम् उमाया धवो वल्लभ पायादिति । अत्र वस्तुमात्र द्वितीय प्रतीत नालङ्कार इति श्लेषस्यैव विषय ॥—*Op cit*.

pp 235-36.

This view of Ānandavardhana—*viz* that in शब्दशक्तिमूलध्वनि there must *necessarily* be an apprehension of the *unexpressed relation* to link the two apparently discrete ideas, seems to be contrary to the opinion of later authors like Mammata etc, who state that mere वस्तु (fact) might also be suggested in a case of शब्दशक्तिमूलध्वनि. As Mammata observes —

अलंकारोऽथ वस्त्वेव शब्दाद् यत्रावभासते ।
प्रधानत्वेन स ज्ञेय शब्दशक्त्युद्भवो द्विधा ॥
—*Kavyaprakāśa*, IV 38

As an example of शब्दशक्तिमूलवस्तुध्वनि, Mammata cites the verse —

'पन्थिअ ण एत्थ सत्थरमत्थि मण पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥'—and notes: "अत्र यद्युपभोगक्षमोऽसि तदाऽस्स्वेति व्यज्यते ॥'—Ruyyaka, in his commentary called काव्यप्रकाशसंकेत on Mammata's work, criticises Mammata for regarding वस्तुध्वनि as a variety of शब्दशक्तिमूलध्वनि, though he himself justifies शब्दशक्तिमूलवस्तुध्वनि in his *Alamkāra-Sarvasva* Compare: " यत्र तु प्रस्तुताभिधेयपरत्वेऽपि वाक्यस्य श्लिष्टपदमहिम्ना वक्ष्यमाणार्थनिष्ठमुपक्षेपापराभिधान सूचकत्व तत्र किं श्लेष उत शब्दशक्तिमूलध्वनिरिति विचार्यते । तत्र न तावत् श्लेष । अर्थद्वयस्य अन्वितत्वेन अभिधेयतया वक्तुमनिष्टे. । नापि ध्वनि । उपक्षेप्यस्य अर्थस्य असबद्धत्वाभावात् तेन सह उपमानोपमेयत्वस्य अविवक्षणात् । न चान्या गतिरस्ति । तदत्र किं कर्त्तव्यम् । उच्यते— श्लेषस्य उक्तनयेन अप्रवृत्तेर्ध्वनेरेवाय विषय इति निश्चय । तथाहि— शब्दशक्तिमूले ध्वनौ अर्थान्तरस्य असबद्धत्वात् सम्बन्धार्थमौपम्य

कल्प्यते । स च संबन्धः प्रकारान्तरेण औपम्यपरिहारेण यद्यप्युपपादयितुं शक्यः स्यात् , तत् कोऽयमभिनिवेशस्तत्र उपमाध्वनौ । वस्तुध्वनिरपि सम्बन्धान्तरेण तत्र समीचीनः स्यात् । अत एव—

'अलंकारोऽथ वस्त्वेव शब्दाद् यत्रावभासते।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥'—

इति न्यायमवलम्ब्येन (?) द्विधा शब्दशक्त्युद्भव उक्तः । एवं प्रकृतेऽपि यत्र सूचनाव्यापारोऽस्ति तत्र शब्दशक्तिमूलो वस्तुध्वनिर्बोद्धव्यः। यथा—

'सद्यः कौशिकदिग्विजृम्भणवशादाकाशराष्ट्रं रसात्
त्यक्त्वा धूम्ररक्तान्तिवल्कलधरो राजास्तशैलं ययौ।
तत्कान्ताप्यथ सान्त्वयन्त्यलिकुलध्वानैः समुल्लासिभिः
क्रन्दन्तं कुमुदाकरं सुतमिव क्षिप्रं प्रतस्थे निशा ॥' इति।

हरिश्चन्द्रचरितेऽत्र प्रभातवर्णनानुगुण्येन राजशब्दाभिधेयेऽस्तमुपेयुषि चन्द्रे रोहिताश्वाख्यतनयसहितया उशीनर्या वध्वा युक्तस्य हरिश्चन्द्रस्य राज्ञो विश्वामित्रसंपादितोपद्रववशात् प्रातः स्वराष्ट्रं त्यक्त्वा वाराणसी प्रति गमनं सूचितं स्यात् । तथा च कौशिकशब्दः प्रकृते इन्द्रोलूकयोर्वर्तते । सूचनीयार्थविषयत्वेन तु विश्वामित्रवृत्तिः । वल्कलसुताभ्यां स्वौपम्यं सूचनीयार्थनैरपेक्ष्येण सादृश्यसंभवमात्रेण संभवनीयम् । अतश्च प्रकृतेन सूचनीयस्य संबन्धात् शब्दशक्तिमूलो वस्तुध्वनिरयम् ॥[1] — *Op. cit.*, pp. 101-103. Jayaratha remarks that this incongruen-

1. It is really an instance of शब्दार्थोभयशक्तिमूलध्वनि as Jayaratha observes in his commentary "अत्र च यद्यपि सूनादिशब्दार्थशक्तिरप्यस्ति इति वस्तुध्वनेरुभयशक्तिमूलत्वमेव तथापि शब्दशक्तिरत्र स्फुटा स्थिरेति तन्मूलत्वमेव ग्रन्थकृताऽप्युक्तम् ॥—*Ibid.* We might justify Rūyyaka by referring to the maxim : 'यो हि उभयोः स्थाने भवति लभतेऽसावन्यतरव्यपदेशम्' as he has himself done in a similar context in defending the *Dhvanikāra*.

cy between the two views of Rūyyaka as stated in two different places is only apparent and can be easily reconciled. For the criticism in his *Kāvyaprakāśa-Saṃketa* should be construed as having reference to the particular illustration and not to वस्तुध्वनि as such. As he notes :—

"... यत्तु काव्यप्रकाशसंकेते ग्रन्थकृता वस्तुध्वनेः शब्दशक्ति-मूलत्वं चिन्त्यमुक्तम्, तदुदाहरणाभिप्रायेणैवोन्नेयम् । तत्र हि 'पन्थिअ ण इत्थ सत्थर—' इत्याद्युदाहरणम् उभयशक्तिमूल शब्दशक्तिमूलस्य वस्तुध्वनेः श्रीमम्मटेनोपात्तम् ॥"[1]—*Vimarśinī*. *loc. cit.* Jagannātha, too, in his *Rasagaṅgādhara* upholds this twofold classification of शब्दशक्तिमूलध्वनि. The following extract dealing with वस्तु-ध्वनि should be carefully noted :—

"शब्दशक्तिमूलवस्तुध्वनिर्यथा—

'राज्ञो मत्प्रतिकूलान्मे महद् भयमुपस्थितम् ।
बाले वारय पान्थस्य वासदानविधानतः ॥'

अत्रोपभोग देहीति वस्तु राजादिशब्दशक्तिमूलानुरणनविषयः । राज-पदात् चन्द्रोपस्थितावेव चन्द्रजनितभयवारणकारणत्वेन उपभोगस्या-भिव्यक्तेः । न चात्र नृप-चन्द्रयोरुपमानोपमेयभावः, भेदापोहरूपं रूपकं वा तथाऽस्तु इति वाच्यम् । इह नृपरूपस्यार्थस्य चन्द्ररूपार्थ-गोपनमात्रार्थमुपात्तत्वेन युगपदुल्लसितोपमानोपमेययोरुपमारूपक-योस्तात्पर्यविषयताया अयोगात् । न चाससृष्टार्थद्वयबोधने वाक्यभेद-इति वाच्यम् । तुल्यकक्षतया द्वयोरससृष्टयोरर्थयोः प्रतिपिपादयिषि-तत्व एव तस्याभ्युपगमात् । इह तु आच्छादकप्रतीतिसमये आच्छाद्या-

---

1 But this defence does not appear very satisfactory in view of the fact that Ruyyaka in his *Kavyaprakāśasaṃketa* categorically denies शब्दशक्तिमूलवस्तुध्वनि.

प्रतीतिः, आच्छाद्यप्रतीतौ च आच्छादकन्यग्भाव एवेति नास्ति तुल्यकक्षता ॥—*Op. cit.* p. 162.[1] Thus, on the showing of Rūyyaka, Viśvanātha and Jagannātha alike, it becomes evident that when out of two senses apprehended through *homonymous words* one is intended to be merely covertly hinted at ( आच्छाद्य ) instead of being plainly stated, and the other serves as a cloak ( आच्छादक ) to hide the former in the first instance, it is a case of वस्तुध्वनि pure and simple, the former being conveyed through *suggestion* ( व्यङ्ग्य ) and the latter through *Denotation* ( अभिधेय ).

Appayya Dikṣita's view regarding शब्दशक्तिमूलध्वनि is somewhat different, however. According to him, when from a particular *homonym* ( अनेकार्थ शब्द ), प्रकृत and अप्रकृत senses are cognised, both of them are *equally* conveyed by Denotation ( अभिधाव्यापार ), the restrictive force of factors like संयोग, विप्रयोग etc. as enumerated by Bhartṛhari, being logically unjustifiable. The अप्रकृत sense is not *suggested*, as the followers of Mammaṭa would have it. But the apprehension of the relation (सम्बन्ध ) that would link these two apparently isolated senses is caused by the function of suggestion ( व्यञ्जनाव्यापार ) and thus we have शब्दशक्तिमूलालंकारध्वनि in such cases. As he states : ननु च यत्र अनेकात्र प्रकरणाद्यविशिष्टम्, तत्र भवतु अनेकत्राप्यभिधाव्यापारः । यत्र

---

1 Compare also :

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भा ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥'—(वेणी० १।६)

—अत्र शरद्वर्णनया प्रकरणेन धार्तराष्ट्रादिशब्दाना हंसाद्यर्थाभिधाने नियमनात् दुर्योधनादिरूपोऽर्थः शब्दशक्तिमूलो वस्तुध्वनिः । इह च प्रकृतप्रबन्धाभिधेयस्य द्वितीयार्थस्य मुख्यतयैव विवक्षितत्वात् उपमानोपमेयभावो न विवक्षित इति नोपमाध्वनिर्न च श्लेष इति सर्वमवदातम् ॥—*Sāhitya-Darpaṇa*, Chap. X.

प्रकरणस्य क्वचिदर्थेऽवस्थितत्वेऽपि अप्राकरणिक वाक्यान्तर प्रतीयते, तत्र का गति ? यथा—

'असावुदयमारूढ कान्तिमान् रक्तमण्डल ।
राजा हरति लोकस्य हृदय मृदुभि करै. ॥'—इति चन्द्रोदयवर्णनप्रस्तावे । अत्र हि अप्राकरणिको भूपतिरभ्युदयादिविशिष्ट. प्रतीयते । अत्र प्राञ्च.—'तत्र शब्दशक्तिमूलो व्यञ्जनाव्यापार एव शरणम्, गत्यन्तराभावात् । न हि तस्य तत्राभिधा सभवति, तस्या. प्रकरणेन नियम्भितत्वात । नापि लक्षणा, मुख्यार्थबाधाद्यभावात् । न चाभिधाया इव व्यञ्जनस्यापि प्रकरणेन नियन्त्रणे, तेनापि न तन्निर्वाह इति वाच्यम्, तस्य धर्मिग्राहकमानेन तदनियम्यत्वस्यैव सिद्धे ॥... वय तु ब्रूम —'असावुदयमारूढ —' इत्यादौ प्राकरणिकेऽर्थे प्राकरणिकवत् अप्राकरणिकेऽपि 'राज-कर-मण्डलादिशब्दाना परस्परान्वय-योग्य-नृपति-तद्ग्राह्यधनदेशादिवाचकाना समभिव्याहाररूपमभिधानियामकमस्तीत्यर्थद्वयस्यापि प्राकरणिकत्वे इव प्राकरणिकाप्राकरणिकरूपत्वेऽपि उभयत्र अभिधैव व्यापार, यथोक्तसमभिव्याहारस्यापि शब्दान्तरसंनिधिरूपत्वेन प्रकरणवदभिधानियामकत्वात् ।.. तथाहि—प्रकरणादिकमुल्लङ्घ्य व्यञ्जनाव्यापारेणापि अर्थान्तरप्रत्ययो न सर्वत्र वक्तु शक्यते, प्रकरणादीनामभिधानियामकत्वकल्पनस्यैव व्यर्थत्वापत्ते ॥ तद्धि नादृष्टार्थम्, किं तु 'सैन्धवमानय इत्यादौ एकार्थमात्रपर नानार्थशब्दस्थले अर्थविशेषस्मृतिव्यवस्थार्थ तत । यदि तत्रापि व्यञ्जनाव्यापारेणार्थान्तरप्रत्यय स्यात्, तदा कथमेषा सिध्येत् । न हि अभिमतानभिमतक्षेत्रसाधारणस्य जलाशयस्य अभिमतक्षेत्रगामिनीमेका कुल्या विधाय अनभिमतक्षेत्रगामिन कुल्यान्तरस्यापि कल्पने जलस्याभिमतक्षेत्रैकगामित्व-व्यवस्था कृता भवति । तथा च यत्र कवयितुश्चमत्काराय अप्राकरणिकेऽप्यर्थे तात्पर्यम्, यत्र वाऽश्लीलदोष, तत्रैव व्यञ्जनाव्यापारोन्मेष, न सर्वत्र इति तद्व्यवस्थासिद्धयै तत्र तत्र नियामकानि अस्मदुक्तानि अन्यादृशानि वा अवश्यमादर्त-

व्यानि, तेषां च अभिधानियामकत्वमेव वक्तुं शक्यमिति व्यर्थस्तत्र व्यक्तिकल्पनापरिश्रम, दुर्वारश्च तत्र व्यक्तिवादिमतेऽपि अभिधा व्यापार । तस्मात् प्रस्तुताप्रस्तुतोभयपरेऽपि प्रस्तुताप्रस्तुतोभय वाच्यार्थेऽभिधैव वृत्ति । तदुपस्थितेषु च पदार्थेषु आकाङ्क्षादि-सहकारिवशाद् उभयविधवाक्यार्थप्रत्यय —इत्यप्रस्तुतविषये न पदार्थ-प्रतीतये नापि वाक्यार्थप्रतीतये व्यक्तिरभ्युपगन्तव्या ॥ यत्तु प्राचाम-प्रस्तुते शक्तिमूलव्यञ्जनवृत्त्यभिधानम्, तदप्रस्तुतार्थप्रतीतिमूलके यथा 'उदयमारूढ —' इत्यादिविशेषणविशिष्ट पृथिवीपति स्वरूपै-र्महीधरैर्न लोकस्य हृदयं रञ्जयति, एवं तथाभूतश्चन्द्रमा मृदुलै, किरणैरित्यादिरूपेण प्रतीयमाने उपमाद्यलङ्कारे तदवश्यम्भाव-दृढीकरणाभिप्रायेण । न तु तत्रापि वस्तुतो व्यञ्जनव्यापारा-स्तित्वाभिप्रायेण ॥—*Vṛttivārttika*, pp 11-16

Now, it might be contended against this interpretation of शब्दशक्तिमूलध्वनि, that there would be no scope for वस्तुध्वनि based on शब्दशक्ति and the traditional two-fold division would fall down For, in the above view the अप्रस्तुत fact would also be conveyed through *denotation* (अभिधा), and there being no *implied relation* to be communicated in this case, as in the former, the aid of suggestion would not be required here at all Appayya Dikṣita s arguments are ingenious though somewhat strained 'नन्वेवम्—शब्दशक्ति-मूलस्यालङ्कारध्वने आच्छादितायतदिगम्बरम्— इत्याद्युदा-हरणसत्त्वेऽपि तन्मूलो वस्तुध्वनिर्न स्यात् निरलङ्कारेऽप्रस्तुतार्थ एव वस्तुध्वनेरुदाहरणीयत्वात् तत्र च त्वयाऽभिधाङ्गीकारात्—इति चेत्, न । यत्र अप्रस्तुतेऽर्थेऽभिधयैव प्रतिपाद्यमाने तन्मूलमनभिधेयं वस्तु प्रतीयते, तत्र तदङ्गीकारात् इति । यथा—

'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम् ।' —इति । अत्र हि 'अशनि'-शब्देन प्रस्तुताद् [illegible]न्यस्मिन् समभि-

व्याहृत-शनिविरुद्धरूपेऽप्ययं अभिधयैव प्रतिपाद्यमाने 'विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुतः' इत्युपश्लोक्यस्य प्रभावातिशयः प्रतीयते। इत्ययमेव प्राचीनैरपि शब्दशक्तिमूलो वस्तुध्वनिरुदाहृतः॥"
—*Op cit*, pp. 16-17.

Jagannātha's distinction between श्लेष, समासोक्ति on the one hand and शब्दशक्तिमूलध्वनि on the other is more logical and precise :—

'श्रुत्यैकयाऽनेकार्थप्रतिपादनं श्लेषः॥ तच्च द्वेधा। अनेकधर्मपुरस्कारेण, एकधर्मपुरस्कारेण च। आद्यं द्वेधा। अनेकशब्दप्रतिभानद्वारा, एकशब्दप्रतिभानद्वारा चेति त्रिविधः श्लेषः। तत्राद्यः सभङ्गो द्वितीयो ह्यभङ्ग इति वदन्ति। तृतीयस्तु शुद्धः। एव त्रिविधोऽप्ययं प्रकृतमात्राप्रकृतमात्र प्रकृताप्रकृतोभयाश्रितत्वेन पुनस्त्रिविधः। अत्राद्ये भेदे द्वितीये च विशेष्यस्य श्लिष्टतायां कामचारः। तृतीयभेदे तु विशेषणवाचकस्यैव श्लिष्टत्वं न विशेष्यवाचकस्य। तथात्वे तु शब्दशक्तिमूलध्वनेरुच्छेद एव स्यात्। विशेषणमात्रश्लिष्टतायामपि प्रकृताप्रकृतधर्मिणोरुपादान एव श्लेषः। प्रकृतधर्मिमात्रस्य उपादाने तु समासोक्तेरेव विषयः। यत्र तु प्रकृताप्रकृतोभयविशेष्ययोरपि श्लिष्टपदोपात्तत्वं स तु ध्वनेर्विषय इत्युक्तम्। स च यथा—

'अविरल-विगलद्दानोदक-धारासारसिक्तधरणितलः।
धनदाग्रमहितमूर्त्तिर्जयतितरां सार्वभौमोऽयम्॥'

—अत्र राजनि प्रस्तुते उदग्दिग्गजोऽप्रस्तुतोऽपि व्यञ्जनमर्यादया प्रतीयते। तत्र अप्रस्तुताभिधानं मा प्रसाङ्क्षीत् इति प्रस्तुताप्रस्तुतयोरुपमानोपमेयभावे तात्पर्यं कल्प्यते। इम च शब्दशक्तिमूलानुरणनरूपं ध्वनिमाहुः॥"—*Rasagangādhara*, pp. 522-23 & 529.

**TEXT**

§ ३३। ननु अलंकारान्तरप्रतिभायामपि श्लेषव्यपदेशो भवतीति दर्शितं भट्टोद्भटेन, तत् पुनरपि शब्दशक्तिमूलो ध्वनि-

निरवकाश इत्याशङ्क्येदमुक्तम्—'आक्षिप्त'-इति। तदयमर्थः—यत्र शब्दशक्त्या साक्षादलंकारान्तरं वाच्यं सत् प्रतिभासते, स सर्वः श्लेपविषयः। यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालंकारान्तरं प्रकाशते, स ध्वनेर्विषयः। शब्दशक्त्या साक्षादलंकारान्तरप्रतिभा यथा—

तस्या विनापि हारेण निसर्गादेव हारिणौ।
जनयामासतुः कस्य विस्मयं न पयोधरौ॥

अत्र शृङ्गारव्यभिचारी विस्मयाख्यो भावः साक्षाद्विरोधालंकारश्च प्रतिभासत इति विरोधच्छायानुग्राहिणः श्लेपस्यायं विषयः, न त्वनुस्वानोपमस्य ध्वनेः। अलक्ष्यक्रमव्यङ्ग्यस्य तु ध्वनेर्वाच्येन श्लेपेण विरोधेन वा व्यञ्जितस्य विषय एव। यथा ममैव—

श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः।
बिभ्राणां मुखमिन्दुरूपमखिलं चन्द्रात्मचक्षुर्दधत्
स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात्॥

अत्र वाच्यतयैव व्यतिरेकच्छायानुग्राही श्लेपः प्रतीयते।

यथा च—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥

यथा वा—

चमहिअमाणसकञ्चणपङ्कजणिम्महिअपरिमला जस्स।
अखण्डिअ-दाण-पसारा बाहुप्पलिहा च्चिअ गइन्दा॥

अत्र रूपकच्छायानुग्राही श्लेपो वाच्यतयैवावभासते॥

## EXPOSITION

§ 33. In this section Ānandavardhana brings out the significance of the qualifying adjunct 'आक्षिप्त.' (*implied*.

*suggested*). 'आक्षिप्त-शब्दस्य कारिकागतस्य व्यवच्छेद्यं दर्शयितुं चोद्येनोपक्रमते—नन्वलंकारेत्यादिना ।'—*Locana.*

ननु....ध्वनेर्विषय इति—The opponents might raise an objection to the above distinction between श्लेष and शब्दशक्तिमूलध्वनि as being unsatisfactory and illogical. For, Udbhaṭa has elaborately shown in his *Kāvyālaṁkāra-Sāra-Saṁgraha* that in the case of श्लेष too there is the comprehension of other poetic figures like उपमा, विरोध, रूपक etc., though in such cases श्लेष *alone* is the principal figure of speech, the apprehension of the latter being of a fleeting sort and thus momentary in existence. Consequently श्लेष is the *real* figure (वास्तव) and others only apparent (प्रतिभासिक). As he states :—

'एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम् ।
स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्टमिहोच्यते ॥
अलंकारान्तरगतां प्रतिभां जनयत् पदैः ।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत् प्रतीयताम् ॥'[1]

—*Op. cit.*, IV. 9-10.

---

1. The following exposition of Udbhaṭa's views on श्लेष and its relation to other figures in the event of their co-existence is very lucid :—

"अत्र विचार्यते—अयं चालंकारः ( viz. श्लेषः ) प्रायेणालंकारान्तरस्य विषयमभिनिविशते । तत्र किमस्य बाधकत्वम्, आहोस्वित् संकीर्णत्वम्, उताहो बाध्यत्वम् इति । अत्राहुरुद्भटाचार्याः—'येन नाप्राप्ते य आरभ्यते स तस्य बाधकः'—इति न्यायेन अलंकारान्तरविषय एवायमारभ्यमाणोऽलंकारान्तरं बाधते । न चास्य विविक्तः कश्चिदस्ति विषयो यत्र सावकाशो नान्यं बाधेत । तथाहि अप्रकृतमात्रयोः प्रकृतमात्रयोर्वा तावत् तुल्ययोगितैव जागर्त्ति । प्रकृताप्रकृतयोस्तु दीपकम् । तदनुमोदिताः उपमादयश्च । न च—'देव ! त्वमेव पातालमाशानां त्वं निबन्धनम् । त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥'—इत्यादि-काव्यप्रकाशोक्तो विविक्तो विषय इति वाच्यम् । रूपकस्यैवात्र

Thus, there is no real difference between श्लेष and शब्दशक्ति-मूलध्वनि, and the latter can be easily comprehended under the former, and as such need not be regarded as a separate category at all. The word 'आक्षिप्तः' has been used in the *kārikā* as a guard against such a possible contention. Though on Udbhaṭa's view there is the apprehension of other poetic figures in the cases of श्लेष, still that other figure is *expressed in words* and not suggested. But in the case of शब्दशक्तिमूलध्वनि the cognition of the poetic figure (in the nature of a distinct relation between the प्रस्तुत and अप्रस्तुत ideas) is generated through the power of *suggestion* and not of *denotation*. And this makes all the difference between the two categories. Thus the word 'आक्षिप्तः' as qualifying 'अलंकारः' in the above *kārikā* is significant. Ānandavardhana cites some instances of श्लेष where other अलंकार's are *explicitly stated*. These are certainly not cases of शब्दशक्तिमूलध्वनि, where the poetic figure *must be suggested*.

'तया....पयोधरी'—It is an instance of श्लेष and विरोध where the latter is *expressed* in so many words.

अत्र....ध्वने—Just as 'Wonder' (विस्मय), the व्यभिचारि-भाव pertaining to शृङ्गार, is *expressed* by the term 'विस्मय' itself, so too the particle अपि *denotes* विरोध (*contradiction*) instead of suggesting it. As *Locana puts it—

*स्फुटत्वात्।....कथं तर्हि 'नदीना गगन विप्रशासात्र सागरो यथा'— इत्यादौ उपमाया प्रत्ययः? कथं वा यथेव 'यथा'-शब्दस्थाने 'किन्तु'-शब्ददाने उत्प्रेक्षायाः? अपर इति श्रुते च व्यस्तस्येति चेत्, न। अत्र हि उपमादीनां प्रतिभानमात्रं न तु वास्तवी स्थितिः। नहि एतेन युवती रजतत्व प्रतीयमान-मपि वस्तुतोऽस्ति। तस्मादुपमादिप्रतिभोत्पत्तिहेतुः श्लेष एव अलङ्कारः सर्वेषामलङ्कारः" इति॥—*Rasagaṅgādhara*, pp. 525-26. Later theorists have however criticised this position of Udbhaṭa. See *Kāvyaprakāśa*, IX; *Sāhityadarpaṇa*, X; *Rasagaṅgādhara*, *loc. cit.*

"अपि शब्दोऽय विरोधमाचक्षाणोऽर्थद्वयेऽपि अभिधाशक्ति नियच्छति । हरतो हृदयमवश्यमिति हारिणौ । हारो विद्येते ययोस्तौ हारिणाविति । अत एव विस्मयशब्दोऽस्यैवार्थस्योपोद्बलक । अपिशब्दाभावे तु न तत एव अर्थद्वयस्याभिधा स्यात् , स्वसौन्दर्यादेव स्तनयोर्विस्मयहेतुत्वोपपत्ते । विस्मयाख्यो भाव इति दृष्टान्ताभिप्रायेण उपात्तम् । यथा विस्मय शब्देन प्रतिभाति 'विस्मय' इत्यनेन शब्देन, तथा विरोधोऽपि प्रतिभाति अपीत्यनेन शब्देन ॥—*Op cit*, pp 236-37

'अलक्ष्यक्रम विषय एव'—But though the verse 'तस्या विनापि—' cannot be regarded as an instance of शब्दशक्तिमूलध्वनि of the सलक्ष्यक्रम category, yet it can be properly regarded as an illustration of असलक्ष्यक्रमध्वनि, since the *emotion of love* (शृङ्गार) is predominant in it As *Locana* remarks 'तत् किं सर्वथैवात्र ध्वनिर्नास्ति-इत्याशङ्क्याह—अलक्ष्येति । विरोधेन वेति— वाग्रहणेन श्लेषविरोध-सकरालकारोऽयमिति दर्शयति । अनुग्रहयोगादेकतरत्यागग्रहणनिमित्ताभावो हि वा शब्देन सूच्यते ॥'—*Op cit*, p 237

'श्लाघ्याशेष प्रतीयते'—*In this verse again* श्लेष and व्यतिरेक are both *expressed* and consequently it cannot be regarded as an instance of शब्दशक्तिमूलध्वनि Compare '*Locana*, "सुदर्शन चक्रे करे यस्य । व्यतिरेकपक्षे सुदर्शनो श्लाघ्यौ करावेव यस्य । चरणारविन्दस्य ललित त्रिभुवनाक्रमणक्रीडनम् । चन्द्ररूप चक्षुर्धारयन् । वाच्यतयैवेति । स्वतनोरधिकामिति शब्देन व्यतिरेकस्य उक्तत्वात् ॥"—*ibid* The verse 'भ्रमिमरतिम्—' illustrates how श्लेप and रूपक are both वाच्य Compare *Locana* भुजगशब्दार्थपर्यालोचनाबलादेव विषशब्दो जलमभिधायापि न विरन्तुमुत्सहते । अपि तु द्वितीयमर्थं हालाहल लक्षणमाह । तदभिधानेन विनाऽभिधाया एवासमाप्तत्वात् । भ्रमिप्रभृतीनां तु मरणान्तानां साधारण एवार्थ ॥—*Op cit*, p 338 The verse has also been

cited in Mammata's *Kāvyaprakāśa* as an instance of गुणीभूत-व्यङ्ग्य of वाच्यसिद्ध्यङ्ग variety. 'अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत्. *We are to note that while* Abhinavagupta considers the idea of हालाहल to be *expressed* (वाच्य), according to Mammaṭa it is *suggested* (व्यङ्ग्य)

'चमहिअ....गइन्दा"—'निराशीकृतत्वेन खण्डितानि यानि मानसानि शत्रुहृदयानि तान्येव काञ्चनपङ्कजानि। ससारत्वात् सैहेतुभूतं। णिम्महिअपरिमला इति। प्रसृतप्रतापसारा अखण्डित-विसरणप्रसरा बाहुपरिघा एव यस्य गजेन्द्रा इति। गजेन्द्रशब्दवशाच्च महिअशब्द परिमलशब्दो दानशब्दश्च मोटनसौरभ मद-लक्षणानर्थान् प्रतिपाद्यापि न परिसमाप्ताभिधाव्यापारा भवन्तीत्युक्तरूपं द्वितीय-मप्यर्थमभिदधत्येव ॥"—'*Locana*, p 238

TEXT

§ ३४। स चाक्षिप्तोऽलंकारो यत्र पुनः शब्दान्तरेणाभिहित-स्वरूपस्तत्र न शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिव्यवहारः। तत्र वक्रोक्त्यादिवाच्यालंकारव्यवहार एव। यथा—

'दृष्ट्या केशव ! गोपरागहृतया किञ्चिन्न दृष्टं मया
तेनैव स्खलितास्मि नाथ ! पतितां किं नाम नालम्बसे।
एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति
र्गोप्यैवं गदितः सलेशमवताद् गोष्ठे हरिर्वश्चिरम् ॥

एवञ्जातीयकः सर्व एव भवतु कामं वाच्यश्लेषस्य विषयः। यत्र तु सामर्थ्याक्षिप्तं सदलंकारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः। यथा—'अत्रान्तरे कुसुमसमययुगमुपसंहरन्न-जृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः।'

यथा च—'उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः।
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥'

यथा वा—'दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः।

दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥'

एषूदाहरणेषु शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे वाक्यस्यासम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीद् इति अप्राकरणिक-प्राकरणिकार्थयोरुपमानोपमेयभावः कल्पयितव्यः सामर्थ्यादि इत्यर्थाक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति विभिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषयः। अन्येऽपि चालंकाराः शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्ये ध्वनौ सम्भवन्त्येव। तथा हि विरोधोऽपि शब्दशक्तिमूलानुस्वानरूपो दृश्यते। यथा स्थाण्वीश्वराख्य-जनपदवर्णने भट्टबाणस्य—

'यत्र च मातङ्गगामिन्यः शीलवत्यश्च, गौर्यो विभवरताश्च, श्यामाः पद्मरागिण्यश्च, धवलद्विजशुचिवदना मदिरामोदिश्वसनाश्च प्रमदाः ॥

## EXPOSITION

§ 34 Now Ānandavardhana justifies the use of the restrictive particle एव in the above *Karika* 'एवमाक्षिप्तशब्दस्य व्यवच्छेद्य प्रदर्श्य एवकारस्य व्यवच्छेद्य दर्शयितुमाह—स चेति। —*Locana* स च व्यवहार एव—We have noted that when the relation between the प्रकृत and अप्रकृत ideas is not expressly stated, it is a case of शब्दशक्तिमूलध्वनि But if the poet uses any such word that is *expressive* ( वाचक ) of the relation which has already been suggested, it would not entitle the piece to be considered as a specimen of शब्दशक्तिमूलध्वनि *To be a case of* शब्दशक्तिमूलध्वनि *the relation must always be suggested, and in no way expressed* Otherwise it would be regarded merely as an instance of such figures of speech as वक्रोक्ति consisting in witty expressions and striking modes of speech Thus, एव is significant excluding as it does such cases from the scope of शब्दशक्तिमूलध्वनि

Abhinavagupta's comments are very illuminating on this point "उभयार्थप्रतिपादनशक्तशब्दप्रयोगे यत्र तावदेकतरविषयनियमनकारणम् अभिधाया नास्ति, यथा—'येन ध्वस्तमनोभवेन' इति, यत्र वा प्रत्युत द्वितीयाभिधाव्यापारसद्भावावेदकं प्रमाणमस्ति यथा—'तस्या विना' इत्यादौ, तत्र तावत् सर्वथा 'चमत्कृत' इत्यन्ते। सोऽर्थोऽभिधेय इति स्फुटमद। यत्रापि अभिधाया एकत्र नियमहेतु प्रकरणादिर्विद्यते तेन द्वितीयस्मिन् अर्थे नाभिधा मनागमति, तत्र द्वितीयोऽर्थोऽसावाक्षिप्त इत्युच्यते, तत्रापि यदि पुनस्तादृक्छब्दो विद्यते येनासौ नियामक प्रकरणादिरपहतशक्तिक सम्पाद्यते। अत एव साऽभि [illegible]र्बाधिताऽपि सती प्रतिप्रसूतेव तत्रापि न ध्वनेर्विषय इति तात्पर्यम्। चशब्दोऽपिशब्दार्थ भिन्नक्रम। आक्षिप्तोऽपि आक्षिप्ततया झटिति सम्भावयितुमारब्धोऽपि इत्यर्थं। न स्वसामर्थ्याक्षिप्त किन्तु शब्दान्तरेण अन्येन अभिधाया प्रतिप्रसवनाद् अभिहितस्वरूप सम्पन्न। पुनर्ग्रहणेन प्रतिप्रसव व्याख्यात सूचयति। तेनैवकार आक्षिप्ताभास निराकरोति"—*°Locana*, pp 238-39

This rule holds good in the case of emotions ( रस ) as well Thus if a particular emotion properly developed and suggested through विभाव s अनुभाव s and सचारिभाव's be again *denoted* by words *expressive* ( वाचक ) of it, like शृङ्गार, करुण etc, it would be regarded as a defect and reflect the bad craftsmanship of the poet Jagannātha s strictures on this point are worthy of note इत्यमविरोधसपादनेनापि निवध्यमानो रसो रसशब्देन शृङ्गारादिशब्दैर्वा नाभिधातुमुचित। अनास्वाद्यतापत्ते। तदास्वादस्य व्यञ्जनमात्रनिष्पाद्य इत्युक्तत्वात्। यत्र विभावादिभिरभिव्यक्तस्य रसस्य स्वशब्देनाभिधान तत्र को दोष इति चेत् व्यङ्ग्यस्य वाच्यीकरणे सामान्यतो वमनाख्यदोषस्य वक्ष्यमाणत्वात्। आस्वाद्यतावच्छेदकरूपेण प्रत्ययाजनकतया रसस्थले वाच्यवृत्ते वापेयकल्पत्वेन विशेषदोषत्वाच्च॥—*Op cit*, p 61.

'दृष्ट्या केशव ! ....चिरम्'[1]—Abhinavagupta explains the verse as follows : "हे केशव ! गोधूलिहृतया दृष्ट्या न किञ्चिद दृष्ट मया। तेन कारणेन स्खलितास्मि मार्गे । ता पतिता सती मा कि नाम क खलु हेतु यन्नालम्बसे हस्तेन । यतस्त्वमेव एकोऽतिशयेन बलवान् निम्नोन्नतेषु सर्वेषामबलाना बालवृद्धाङ्गनादीना खिन्नमनसा गन्तुमशक्नुवता गतिरालम्बनाभ्युपाय इत्येवविधोऽर्थो यद्यप्येते प्रकरणेन नियन्त्रिताभिधाशक्तय शब्दास्तथाऽपि द्वितीयेऽर्थे व्याख्यास्यमानेऽभिधाशक्तिर्निरुद्धा सती 'सलेश'मित्यनेन प्रत्युज्जीविता। तत्र सलेश ससूचनमित्यर्थं, अल्पीभवन हि सूचनमेव। हे केशव ! गोप स्वामिन् ! रागहृतया दृष्ट्येति । केशवगेन उपरागेण हृतया दृष्ट्यति वा सबन्ध । स्खलितास्मि खण्डितचरित्रा जातास्मि । पतितामिति भर्तृ भाव मा प्रति । एक इति असाधारण सौभाग्यशाली त्वमेव । यत सर्वासामबलाना मदनविधुरमनसामीर्ष्याकालुष्य निरासेन सेव्यमान सन् गति जीवितरक्षोपाय इत्यर्थं ॥ —*Op cit*, p 240 Thus, the use of the word 'सलेशम्' (covertly) gives a fresh impetus to the *function of denotation* ( अभिधाव्यापार ) in conveying the second idea as addressed by the maiden to her paramour, which otherwise would have been communicated through the function of suggestion, the function of अभिधा being circumscribed within the sphere of the प्रकृत (contextual) meaning alone by virtue of the restrictive force of प्रकरण or *context* Compare 'अत्र गोपरागादिशब्दाना गोपे राग इत्यादि व्यङ्ग्यार्थाना सलेशमिति पदेन स्फुटतयाऽवभास । सलेशमिति पदस्य परित्यागे ध्वनिरेव'—*Sahityadarpana*

---

1 The verse is really an instance of उभयशक्तिमूलध्वनि though it has been cited by the Dhvanikara as a counter instance ( प्रत्युदाहरण ) in the context of शब्दशक्तिमूलध्वनि For Rūyyaka's justification of this apparent anomaly compare his remarks quoted later on

यत्र....विषयः—Ānandavardhana now defines and illustrates शब्दशक्तिमूलध्वनि. The अलकार (i.e. the relation between the primary and the suggested meanings) must always be *suggested*, as has been so often stated above. He quotes the *Harṣacarita* passage: 'अत्रान्तरे....महाकाल.', as an instance of अलंकारध्वनि based on शब्दशक्ति. Here the word महाकाल has two meanings—one referring to the long summer ( महान् काल. ) through योगशक्ति and the other to Śiva through रूढि. The former being contextual (प्राकरणिक), it is conveyed through *denotion*, and the latter as also the relation of *similarity* (सादृश्य) subsisting between the two are comprehended through *suggestion*.

Compare Abhinavagupta's comments :—

"एवं श्लेषालकारस्य विषयमवस्थाप्य ध्वनेराह—यत्र सिति । कुसुमसमयात्मकं यद्युग मासद्वय तदुपसहरन् । धवलानि हृद्यानि अट्टानि आपणा येन तादृक् फुल्लमल्लिकानां हासो विकासः सितिमा यत्र । फुल्लमल्लिका एव धवलाट्टहासोऽस्येति तु व्याख्याने 'जलदभुजगजम्' इत्येतत्तुल्यमेतत् स्यात् । महांश्चासौ दिनदैर्घ्यदुरनिवाहतायोगात् काल. समय. । अत्र ऋतुवर्णनप्रस्तावनियन्त्रिताभिधाशक्तयः, अत एव 'अवयव-प्रसिद्धे. समुदायप्रसिद्धिर्बलीयसी' इति न्यायमपाकुर्वन्तो महाकालप्रभृतयः शब्दा एतमेवार्थमभिधाय कृतकृत्या एव । तदनन्तरमर्थावगतिर्ध्वननव्यापारादेव शब्दशक्तिमूलात् ॥"—The following passages from °*Locana* are important inasmuch as they record the divergent views of various schools regarding the necessity and scope of the function of suggestion :—(१) अत्र केचिन्मन्यन्ते—'यत एतेषां शब्दानां पूर्वमर्थान्तरेऽभिधान्तरं दृष्टं ततस्तथाविधेऽर्थान्तरे दृष्टतदभिधाशक्तेरेव प्रतिपत्तुर्नियन्त्रिताभिधाशक्तिभ्य एतेभ्यः प्रतिपत्तिर्ध्वननव्यापारादेवेति शब्दशक्तिमूलत्वं व्यङ्ग्यत्वं चेत्यविरुद्धम्' इति ॥

(२) अन्ये तु—'साऽभिधैव द्वितीया अर्थसामर्थ्यं भीष्मस्य भीषण-देवता-विशेष-सादृश्यात्मकं सहकारित्वेन यतोऽवलम्बते ततो ध्वननव्यापाररूपोच्यते'-इति ॥

(३) एके तु—'शब्दश्लेषे तावद् भेदे सति शब्दस्य, अर्थ-श्लेषेऽपि शक्तिभेदात् शब्दभेद इति दर्शने द्वितीयः शब्दस्तत्रानीयते। स च कदाचिद् अभिधा व्यापारात् यथोभयोरुत्तरदानाय—'श्वेतो धावति' इति, प्रश्नोत्तरादौ वा तत्र वाच्यालंकारता। यत्र तु ध्वननव्यापारादेव शब्द आनीतः, तत्र शब्दान्तरबलादपि तदर्थान्तरं प्रतिपन्नं प्रतीयमानमेव युक्तम् ॥

(४) इतरे तु—'द्वितीयपक्षव्याख्याने यदर्थसामर्थ्यं तेन द्वितीयाऽभिधैव प्रतिप्रसूयते, ततश्च द्वितीयोऽर्थोऽभिधीयते एव न ध्वन्यते, तदनन्तरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा सा तावद् भात्येव, न चान्यतः शब्दाद् इति सा ध्वननव्यापारात्। तत्र अभिधाशक्तेः कैश्चिदपि अनाशङ्कनीयत्वात्। तस्या च द्वितीया शब्दशक्तमूलम्। तथा विना रूपणाया अनुत्थानात्। अत एव अलंकारध्वनिरयमिति युक्तम्। वक्ष्यते च—'असम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीद्' इत्यादि।[1] पूर्वत्र तु सश्लेशपदेनैवासम्बद्धता निराकृता। 'येन ध्वस्त'-इत्यत्रसम्बद्धता नैव भाति। 'तस्या विनापि' इत्यत्रापिशब्देन, 'श्लाघ्या—' इत्यत्राधिकशब्देन, 'भ्रमिम्—' इत्यादौ च रूपकेण असम्बद्धता निराकृतेति तात्पर्यम् ॥"—*Locana*, pp. 141-44.

Mahimabhaṭṭa holds that the passage 'अनन्तरे..महाकाल.' is really an instance of *double entendre* ( श्लेष ) based on समासोक्ति, and that the term महाकाल. might as well be dispensed with and replaced by its equivalent महासमयः without

1. This is the position taken by Appayya Dikṣita. Consult the extracts from his *Vṛttivārttika* cited above.

detracting in the least from the sense intended to be conveyed by the poet. Compare :—

"तत्र धर्म्यर्थस्य श्लेषादभिन्नत्व यथा—'अत्रान्तरे—' इति । अत्र हि समासोक्तिनिबन्धना देवताविशेषवाचिनो महाकालशब्दस्यावृत्तिर्न तु तस्यैवोभयार्थत्वनिबन्धनेति वक्ष्यते"—*Op cit*, pp 344-45

Also :—"अत्रान्तरे—' इत्यत्र अप्राकरणिक-महाकालाख्यदेवताविशेषविषया प्रतीति साध्या । तस्याश्च अट्टहास-सम्बन्धो युगसंहार-व्यापारश्चेत्युभय साधन, तस्य तत्कार्यत्वात् । कार्यकारणभावाव सायश्च अनयोरागमप्रमाणमूल इति तत एव समासोक्तिक्रमेण अप्राकरणिकार्थान्तरप्रतीतिसिद्धि न तूभयार्थवृत्तेर्महाकालशब्दस्य सा शक्तिरित्येतदुक्त वक्ष्यते च"—*Op cit* p 417

'उन्नत . . .अभिलाषिणम्'—Here the term पयोधर is श्लिष्ट, meaning स्तन and मेघ The other expressions like उन्नत, प्रोल्लसद्धार etc yield two meanings According to the Dhvanikara उपमा (*similarity* between स्तन and मेघ) is suggested here But Mahimabhatta observes that the verse cannot yield more than one meaning at all, for the poet has not thrown out any hint or clue that might necessitate the re-iteration (आवृत्ति) of the words[1] for the comprehension of the second sense, as in the passage 'अत्रान्तरे—' the poetic figure समासोक्ति led to the apprehension of the अप्रकृत meaning 'Siva' from the term महाकाल', ' उन्नत - इत्यत्र त्वनन्तरोक्त प्रकारो न सम्भवति इति कुतोऽर्थान्तरावगति"—*Op cit*, p 417

'दत्तानन्दा . उत्पादयन्तु'—The verse is from Mayūra's *Sūryaśataka* Here the rays of the sun are the objects of

1 Compare the maxims 'यावत् शब्दाम्नातं तावदर्थ' and 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति' [illegible]

description and as such प्राकरणिक. But since the vocable 'गो' has multiple meanings, it gives rise to the idea of सुरभि, 'the cow', and consequently the *similarity* (सादृश्य) between the two ideas is comprehended through *suggestion*. "पयोभिरिति पानीयैः क्षीरैश्च। सहारो ध्वंसः, एकत्र ढौकनं च। गावो रश्मयः सुरभयश्च।" —*Locana* Compare however Mahimabhatta's criticism 'दत्तानन्दा —' इत्यत्र तु गो शब्दस्य अनेकार्थत्वे ऽप्राकरणिकार्थान्तरप्रतिभोत्पत्तौ न किञ्चिन्निबन्धनमवधारयामः। तथाहि गोशब्द एवानेकार्थत्वात् निबन्धनमुपकल्प्येत, तद्विशेषणजातम्, उभयमपि वा, अन्यस्य अर्थप्रकरणादेरसम्भवात्। तत्र न तावत् गो शब्द एवेति शक्यते वक्तुं, सुरभिव्यतिरिक्ते वप्रादौ अनभिमतेऽपि अर्थान्तरे प्रतीत्युपजननप्रसङ्गात्, तस्य अनेकार्थत्वाविशेषेऽपि नियमहेतोरभावात्। अथ विशेषणजातमेव नियमहेतुरपरं, तद्धि यदर्थानुगुणमुपलभ्यते तत्रैव प्रतीतिमुपजनयतीति, तर्हि ततोऽपि सा तदनुगुणार्थावगतिनिर्निबन्धना तद्वदेवाकस्मिकी कथमिवोत्पद्येत। विशेष्यवाचिनोऽनेकार्थस्य तु तन्निबन्धनभावोपगमे अन्योन्याश्रयदोषः। न च उभयमपि अन्योन्यानुग्राहि तदुपजननसामर्थ्यम् अवनिपवनादिकमिव अङ्कुरम् अर्थान्तरप्रतिभामुपजनयति। यतो जडपदार्थविषय एवायमुपपन्नः क्रमः, यत्र स्वाभाविक एवायं जन्यजनकभावः, न वाच्यवाचकभावविषयः। यत्र हि प्रतिपत्तृपरामर्शापेक्षापरतन्त्रो ऽर्थाध्यवसायोपजनो न स्वाभाविकः॥[1]—*Op cit*, p 418

---

1 Mahimabhatta regards the verse 'दत्तानन्दा —' an instance of the defect known as अवाच्यवचन, since the poet has not used any such particle expressive of *similarity* as इव etc in the absence of which the *double entendre* becomes ineffective and useless, and consequently the intended अप्रकृतार्थ is not cognised Comp 'अत्र हि गाव इत्यस्य विशेष्यवाचिन उपमानाभिमतार्थान्तरवृत्तित्वेऽपि विशेषणानाञ्चोभयार्थानुगुण्येऽपि उपमानस्य तत्सम्बन्धाभिधायिनश्च अवश्यवाच्यस्य अवचनं यत् स दोष इत्येतद् वितनिष्यते'—*Op cit*, p 366

एषूदाहरणेषु .. विषय—As noted above the relation of similarity is apprehended in the illustrations cited in the previous sections, for in the absence of such a *relation* the two senses would remain *discrete* (असम्बद्ध) and the poet would be charged of incongruity for using words that yield ideas that have no bearing on the topic at hand (प्राकरणिकार्थ), and then the maxim 'आम्रान् पृष्टः कोविदारानाचष्टे,'[1] would apply

अन्येऽपि....दृश्येत—Ānandavardhana now proceeds to cite additional instances of शब्दशक्तिमूलध्वनि where other relations like विरोध, आधिक्य, क्रम (constituting the basis of poetic figures like विरोधाभास, व्यतिरेक, यथासंख्य respectively) are suggested besides औपम्य as already noted. The following extract from Rūyyaka's *Kāvyaprakāśa saṃketa* is highly illuminating on this point as it offers an answer to a very cogent and probable objection to the principle laid down above—viz 'असम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीत् इति,' which seems *prima facie* inapplicable in these cases where विरोध and similar other figures are suggested. "ननु यद्येवमसम्बद्धार्थभयादुपमा व्यज्यते, तर्हि विरोधव्यतिरेकाद्यलङ्कारान्तरं कथं व्यङ्ग्यं स्यात्, नहि तेनासम्बद्धार्थत्वं परिह्रियते। नैतत्। यत्र वस्तुमात्ररूपस्य अर्थान्तरप्रतीतिस्तत्र तस्य वाच्य अप्यसम्बद्धत्वभयात् औपम्याख्य सम्बन्ध कल्प्यते। यत्र तु विरोधादेरलङ्कारस्य प्रतीतिस्तत्र तस्य अलङ्कारत्वादेव वैचित्र्यात्मकत्वात् वैचित्र्यस्य च विचित्रवस्तुसंलग्नत्वात् विचित्रेण अलङ्कारेण वाच्यभूतेन अव्यभिचरित एव सम्बन्ध। एवञ्चात्र असम्बद्धार्थत्वशङ्कावकाशो नास्ति। केवलमलङ्कारस्य प्रतीयमानत्वात् आत्मत्वेऽपि ब्राह्मणश्रमणन्यायेन अलङ्कारपूर्वगत्याऽलङ्कारत्वम्॥" —*Op. cit*, p 28.

1 *Compare* Col G A Jacob's *A Handful of Popular Maxims*, Pt ii, p 10

"उपमानोपमेयभावः इति—तेनोपमा-रूपण-व्यतिरेचन-निह्नवादयो व्यापारमात्ररूपा एवात्रास्वादप्रतीतेः प्रधानं विश्रान्तिस्थानं, न तूपमेयादि इति सर्वत्रालंकारध्वनौ मन्तव्यम्। सामर्थ्यादिति। ध्वनन-व्यापारादित्यर्थः"—°*Locana*, p. 245.

As an instance of विरोधालंकारध्वनि the author cites the *Harṣa-carita* text : 'यत्र च....प्रमदाः'—Compare Abhinavagupta's explanation : "मातङ्गेति। मातङ्गवद् गच्छन्ति, तान् शबराश्च गच्छन्ति इति विरोधः। विभवेषु रताः, विगतगृहादेवे स्थाने च रताः। पद्मरागरत्नयुक्ताः पद्मसदृशलौहित्ययुक्ताश्च। धवलैर्द्विजैर्दन्तैः शुचि निर्मलं वदनं यासां धवलद्विजवत् उत्कृष्टविप्रवत् शुचि वदनं च यासाम्॥'—°*Locana*, p. 246.

TEXT

§ ३५। अत्र हि वाच्यो विरोधस्तच्छायानुग्राही वा श्लेषोऽयमिति न शक्यं वक्तुम्। साक्षाच्छब्देन विरोधालंकारस्य अप्रकाशितत्वात्। यत्र हि साक्षाच्छब्दावेदितो विरोधालंकारस्तत्र हि श्लिष्टोक्तौ वाच्यालंकारस्य विरोधस्य श्लेषस्य वा विषयत्वम्। यथा तत्रैव—

'समवाय इव विरोधिनां पदार्थानाम्। तथाहि—सन्निहित-बालान्धकाराऽपि भास्वन्मूर्त्तिः'—इत्यादौ।

यथा वा ममैव—

सर्वैकशरणमक्षयमधीशं धियां हरिं कृष्णम्।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम्॥

अत्र हि शब्दशक्तिमूलानुस्वानरूपो विरोधः स्फुटमेव प्रतीयते॥

EXPOSITION

§ 35. अत्र हि वाच्यो विरोधः....अप्रकाशितत्वात्—According to Ānandavardhana in the instance 'यत्र च मातङ्ग....प्रमदाः' the figure विरोध ( i.e. विरोधाभास) as based on श्लेष is *not expressed* through the *denotative function* of words, because an

the sentence itself there is no word like अपि directly expressive of *contradiction or incongruity* (विरोध), which is thus conveyed through *suggestion* (व्यञ्जना) alone. But as against this see Mahimabhatta's remarks : "यत्र च मातङ्गगामिन्यः'—इत्यत्र च-शब्दावेदितो विरोधः, तस्यापि अपिशब्दस्येव तदर्थाभिधानसामर्थ्योपगमात् । यथा—

"घृणी कर्णः प्रमादी च तेन मेऽर्थरयो मतः ।'

इत्यसिद्ध विरोधस्य साक्षाच्छब्देन अप्रदर्शितत्वम्"—*Vyaktiviveka*, pp. 361-32.

यत्र हि.. .इत्यादौ—In the passage 'सन्निहित—', अपि expresses विरोध, and as such it cannot be regarded as a case of शब्दशक्तिमूलध्वनि. It is merely an instance of वाच्यश्लेष and वाच्यविरोध mixed up together (सङ्कर). Compare *Locana*. यत्र हीति । यस्या श्लेषोक्तौ काव्यरूपायां, तत्र यो विरोधः श्लेषो वेति सकर. तस्य विषयत्वम् । स विषयो भवतीत्यर्थं । कस्य ? वाच्यालकारस्य वाच्यालङ्कृते. वाच्यालङ्कृतित्वस्येत्यर्थ. । तत्रव विरोधे श्लेषे वा वाच्याल कारत्व सुवचमिति यावत् । शालेपु केचोप्वन्धकार. माप्यं वाल प्रत्यप्रद्वान्धकारस्तम. ॥—*Op cit*, pp 245-46 Compare also the following note on विरोधाल कारध्वनि as taken from रसगङ्गाधर : 'एवमल कारान्तरमपि शब्दशक्तिमूलानुरणनस्य विषयः । यथा यमुनावर्णने—'रविकुलप्रीतिमावहन्ती नरविश्रुतप्रीतिमावहन्ति । अवारितप्रवाहा सुवारितप्रवाहा ।' इह नराण चीना च कुलस्य प्रीतिमावहतीति प्रकृतेऽर्थे सिद्धे रविकुलप्रीति नावहतीति द्वितीयोऽप्रकृतोऽर्थो विरोधश्च । एवमन्यत्रापि । यदि तु रविकुलप्रीतिमावहन्त्यपि न रविकुलप्रीतिमावहति, अवारितप्रवाहाऽपि सुवारितप्रवाहा इत्यपिरत्तर्भाव्यते । तदा विरोधाशस्य अपिना उक्तत्वात् द्वितीयार्थस्य च तदाक्षिप्तत्वात्, न ध्वनित्वम् । निपातानां द्योतकतानयेऽपि स्फुटद्योतितस्य तदाक्षिप्तस्य च वाच्य-

"उपमानोपमेयभावः इति—तेनोपमा-रूपण-व्यतिरेचन-निह्नवादयो व्यापारमात्ररूपा एवात्रास्वादप्रतीतेः प्रधानं विश्रान्तिस्थानं, न तूपमेयादि इति सर्वत्रालङ्कारध्वनौ मन्तव्यम्। सामर्थ्यादिति। ध्वनन-व्यापारादित्यर्थः."—*Locana*, p. 245.

As an instance of विरोधालंकारध्वनि the author cites the *Harṣa-carita* text : 'यत्र च....प्रमदाः'—Compare Abhinavagupta's explanation : "मातङ्गेति। मातङ्गवद् गच्छन्ति, तान् शबराश्च गच्छन्ति इति विरोधः। विभवेषु रताः, विगतमहादेवे स्थाने च रताः। पद्मरागरत्नयुताः पद्मसदृशलोहित्ययुक्ताश्च। धवलैर्द्विजैर्दन्तैः शुचि निर्मलं वदनं यासां धवलद्विजवत् उत्कृष्टविप्रवत् शुचि वदनं च यासाम्॥"—*Locana*, p. 246.

## TEXT

§ ३५। अत्र हि वाच्यो विरोधस्तच्छायानुग्राही वा श्लेषोऽयमिति न शक्यं वक्तुम्। साक्षाच्छब्देन विरोधालंकारस्य अप्रकाशितत्वात्। यत्र हि साक्षाच्छब्दावेदितो विरोधालंकारस्तत्र हि श्लिष्टोक्तौ वाच्यालंकारस्य विरोधस्य श्लेषस्य वा विषयत्वम्। यथा तत्रैव—

'समवाय इव विरोधिनां पदार्थानाम्। तथाहि—सन्निहितबालान्धकाराऽपि भास्वन्मूर्तिः'—इत्यादौ।

यथा वा ममैव—

सर्वैकशरणमक्षयमधीशं धियां हरिं कृष्णम्।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम्॥

अत्र हि शब्दशक्तिमूलानुस्वानरूपो विरोधः स्फुटमेव प्रतीयते॥

## EXPOSITION

§ 35. अत्र हि वाच्यो विरोधः....अप्रकाशितत्वात्—According to Ānandavardhana in the instance 'यत्र च मातङ्ग....प्रमदाः' the figure विरोध ( i.e. विरोधाभास) as based on श्लेष is *not expressed* through the *denotative function* of words, because in

the sentence itself there is no word like अपि directly expressive of *contradiction* or *incongruity* (विरोध), which is thus conveyed through *suggestion* (व्यञ्जना) alone. But as against this see Mahimabhatta's remarks : "यत्र च मातङ्गगामिन्यः'—इत्यत्र च-शब्दावेदितो विरोधः, तस्यापि अपिशब्दस्येव तदर्थाभिधानसामर्थ्योपगमात् । यथा—

"घृणी कर्णः प्रमादी च तेन मेऽश्वरथो मतः ।'

इत्यसिद्धं विरोधस्य साक्षाच्छब्देन अप्रदर्शितत्वम्"—*Vyaktiviveka*, pp. 361-32.

यत्र हि....इत्यादौ—In the passage 'सन्निहित—', अपि *expresses* विरोध, and as such it cannot be regarded as a case of शब्दशक्तिमूलध्वनि. It is merely an instance of वाच्यश्लेष and वाच्यविरोध mixed up together (सङ्कर). Compare *Locana* : यत्र हीति । यस्यां श्लेषोक्तौ काव्यरूपायां, तत्र यो विरोधः श्लेषो वेति सकारः तस्य विषयत्वम् । स विषयो भवतीत्यर्थः । कस्य ? वाच्यालंकारस्य वाच्यालङ्कृतेः वाच्यालंकृतित्वस्येत्यर्थः । तत्रव विरोधे श्लेषे वा वाच्यालंकारत्व सुवचमिति यावत् । बालेषु केशेष्वन्धकारः कार्ष्ण्यं बालः प्रत्यग्रश्चान्धकारस्तमः ॥—*Op. cit.*, pp. 245-46. Compare also the following note on विरोधालंकारध्वनि as taken from रसगङ्गाधर : "एवमलंकारान्तरमपि शब्दशक्तिमूलानुरणनस्य विषयः । यथा यमुनावर्णने—'रविकुलप्रीतिमावहन्ती नर-वि-कुलप्रीतिमावहति । अवारितप्रवाहा सुवारितप्रवाहा ।' इह नराणां चीनां च कुलस्य प्रीतिमावहतीति प्रकृतेऽर्थे सिद्धे रविकुलप्रीतिं नावहतीति द्वितीयोऽप्रकृतोऽर्थो विरोधश्च । एवमन्यत्रापि । यदि तु रविकुलप्रीतिमावहन्त्यपि न रविकुलप्रीतिमावहति, अवारितप्रवाहाऽपि सुवारितप्रवाहा इत्यपिरन्तर्भाव्यते । तदा विरोधांशस्य अपिना उक्तत्वात् द्वितीयार्थस्य च तदाक्षिप्तत्वात्, न ध्वनित्वम् । निपातानां द्योतकतानयेऽपि स्फुटद्योतितस्य तदाक्षिप्तस्य च वाच्य-

कल्पत्वात् न तथात्वम् ॥—*Op. cit.*, pp. 159-60.

**यथा वा....प्रतीयते**—One might, however, say following Mahimabhaṭṭa, that in the previous illustration of विरोधालंकार-ध्वनि, viz. 'यत्र च मातङ्गगामिन्यः—', the विरोध has been *expressed* by the perticle च, so it is not a genuine instance of शब्दशक्तिमूलध्वनि. In anticipation of such an objection Ānandavardhana cites another verse of his own, viz. 'सर्वक-शरण—'[1], *where विरोध is completely beyond the scope of the* denotative function of words.

Cp. °*Locana* : "ननु मातङ्गेत्यादावपि धर्मद्वये यश्चकारः स विरोधद्योतक एव। अन्यथा प्रतिधर्मं सर्वधर्मान्ते वा, न क्वचिद् वा चकारः स्यात् यदि समुच्चयार्थः स्यात्, इत्यभिप्रायेण उदाहरणा-न्तरमाह—**पर्येति**। शरण गृहम् अक्षयरूपमगृहं कथम्। यो न धीशः स कथं धियामीशः। यो हरिः कपिलः, स कथं कृष्णः। चतुरः पराक्रमयुक्तो यस्यात्मा स कथं निष्क्रमः। अरिणामरयुक्तानां यो नाशयिता स कथ चक्रं बहुमानेन धारयति। **विरोध** ति। विरोधन-मित्यर्थः। **प्रतीयते** इति। स्फुटं नोच्यते केनचिद् इति भावः।"—*Op. cit.*, p. 246.

## TEXT

§ ३६। एवंविधो व्यतिरेकोऽपि दृश्यते। यथा ममैव—

'खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासश्च ये।

---

1 According to Mahimabhaṭṭa this too is an illustration of वाच्यावचन on grounds already noted in the previous foot-note : 'इहापि वाच्यावचनमवगन्तव्यम्'—*Op. cit.*, p. 366. Pratihārendurāja however considers it an example of श्लेष which gives rise to the cognition of विरोध, though only *apparent*. Compare : 'सर्वैकशरणम्—'इत्यादावपि श्लेषः। तथाह्यत्र सर्वैकशरणमक्षयमित्यादीना शब्दानामर्थभेदेन भिन्नत्वे सति यथायोगमेकप्रयत्नो-च्चार्याणामेकप्रयत्नोच्चार्यशब्दसदृशाना श्रोच्चारणम्। अतो विरोधालकार-प्रतिभोत्पत्तिहेतुरत्र श्लेषः।—*Op. cit.*, p. 88.

ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रिये सन्तु वः ॥

एवमन्येऽपि शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्यध्वनिप्रकाराः सन्ति, ते सहृदयैः स्वयमनुसर्त्तव्याः । इह तु ग्रन्थविस्तरभयान्न तत्प्रपञ्चः कृत. ।

EXPOSITION

§ 36 Ānandavardhana cites his own verse—'ये ऽप्युज्ज्वलयन्ति—', to illustrate शब्दशक्तिमूलव्यतिरेकध्वनि 'नखरुद्धासन्ते येऽवश्य खे गगने न उद्भासन्ते । उभये रश्म्यात्मानोऽङ्घ्र्यात्मानश्च द्वयेऽपि । लीपाण्यर्थावयवविरूपादयेत्यर्थं ॥"—*Locana* Thus the excellence of the solar *rays* over the *feet* of the anthropomorphic deity is *suggested* in this verse Mahimabhatta represents it as a case of logical inference Comp ख येऽभ्युज्ज्वलयन्ति—'इत्यन उभयेषा पादाना व्यतिरेकोऽनुमेयस्तत्र चैषा भिन्नविशेषणत्वमेव हेतु ॥"—*Op cit*, p 362 एवमन्येऽपि कृत —In this way other poetic figures too might be suggested For example, Jagannātha cites the following verse as an instance of शब्दशक्तिमूल-परिणाम-ध्वनि —

''पान्थ मन्दमते कि वा सन्तापमनुविन्दसि ।
पयोधर समाशास्व येन शान्तिमवाप्नुया ॥"—

and observes अत्र झगिति तापशमनहेतुत्वेनोपस्थिते पश्चात् मन्दबोधनीय विशेष्यक-स्मरतापवत्ता-वैशिष्ट्यबुद्धौ सत्या सहृदयस्य तादृश तापशमक रमणीस्तनरूप विषयताद्रूप्यबुद्धिर्भवति— *Op cit*, pp 338 59 It is to be noted that Ānandavardhana does not at all refer to the शब्दशक्तिमूलवस्तुध्वनि as a separate category This silence on the part of the Dhvanikāra has been construed by Ruyyaka in his *Kavayaprakaśa samketa* as testifying to the non-existence of any such category. The verse दृष्ट्या केशव—' however which has been cited as a counter illustration seems at first sight to go against such a thesis, but Rūyyaka has

ably explained it away with clever arguments. The following extract from the *Saṁketa* is very illuminating as it clarifies the position of Dhvanikāra *vis-ā-vis* that of later theorists like Mammaṭa with regard to शब्दशक्तिमूलध्वनि in general and its possible divisions in particular "......एवं तर्हि यत्र शब्दशक्त्या वस्तुमात्रं प्रतीयते यद् 'वस्त्वेवे'ति लक्षितं, तत्र कथमुपमान्तरेण असम्बद्धार्थत्वपरिहारः ? अथ उपमाया अत्राङ्गीकारः कथं तर्हि वस्तुमात्रं व्यङ्ग्यं स्यात् ? सत्यम्, यत्र शब्दशक्त्या वस्त्वन्तरस्य प्रतीतिस्तत्र यदि नासम्बद्धार्थत्वेनौपम्यं नालङ्कारान्तरम् तर्हि वाच्यप्रतीयमानयोरन्यत् किंचित् ज्ञातेयमभ्युपगन्तव्यम्, अन्यथा ऽसम्बद्धार्थस्य परिहारो न स्यात्। ज्ञातेयञ्च चिन्त्यमानं व्यङ्ग्यं प्रति वाच्यार्थस्य सामर्थ्यविशेषे पर्यवस्यति। स च वक्त्रौचित्यादिरूपः। एवं शब्दशक्त्या वाच्यगतेन च सामर्थ्यविशेषेण अर्थान्तरप्रतीतौ कार्यायाम् उभयशक्तिमूलत्वमेवात्र पर्यवस्यति, न केवलं शब्दशक्तिमूलत्वम्। अत एव ध्वनिकृता "आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते"-इत्यादिकारिकयाऽलङ्कारध्वनिरेव शब्दशक्तिमूलो लक्षितः, न वस्तुमात्रध्वनिः। उभयशक्तिमूलस्तु 'शब्दार्थशक्त्याऽऽक्षिप्तोऽपि'—इत्येतत्कारिकावृत्तिग्रन्थे प्रकाशितः। अयन्तु ग्रन्थकार[1] उभयशक्तिमूले भ्रान्तः शब्दशक्तिमूलं वस्तुध्वनिमभ्युपगतवान्। 'पथिअ ण एत्थ—' इत्युदाहरणद्वये क्रमेण वक्त्रौचित्यं प्रतिपाद्यौचित्यं च आश्रित्य शब्दशक्त्याऽर्थान्तरप्रतीतिरित्युभयशक्तिमूलत्वात् केवलशब्दशक्तिमूलत्वं चिन्त्यम्। यत्तु ध्वनिकृता 'दृष्ट्या केशवे'-त्यादि शब्दशक्तिमूले प्रत्युदाहरणत्वेन उदाहृत्योभयशक्तिमूलत्वम् उदाहृतम् तत् 'यो हि उभयोर्भवति लभतेऽसावन्यतरतोऽपि व्यपदेशम्' इति न्यायेन मुख्यतयोभयशक्तिमूलत्वेऽपि अन्यतरव्यपदेशेन शब्दशक्तिमूले प्रकाशनात्। एतद्ग्रन्थकृता तूभयशक्तिमूलोऽन्यादृशः प्रदर्शितः इति प्रकृते शब्दशक्ति-

1. Mammaṭa.

मूलत्वमुक्तमिति चिन्त्यतया प्रतिपादितम् ॥"—*Op. cit*, pp. 29-30. Also, while commenting on the verse 'अतन्द्रचन्द्राभरणा—' cited by Mammata as an illustration of उभयशक्तिमूलध्वनि, Rūyyaka observes : अत्र ग्रन्थकृता उभयशक्तिमूलत्वमित्थमभिप्रेतम्। श्लिष्टशब्दमाहात्म्यात् शब्दशक्तिमूलत्वम्, तद्वर्जितसाधारण-शब्दमाहात्म्यात् अर्थशक्तिमूलत्वमित्युभशक्तिमूलत्वम्, एवं च शब्दशक्तिमूले यान्युदाहरणानि तानि उभयशक्तिमूले स्युः। अवश्यं हि तत्र केनचित् साधारणशब्दप्रयोगेण भवितव्यम्। अथ सति श्लिष्टशब्दप्रयोगे वक्त्रौचित्याद्यर्थशक्तिमाश्रित्योभयशक्तिमूलत्वमत्र वर्ण्यते, तद्युज्यत एव। किंतु 'पथिअ—' इत्याद्युभयशक्तिमूलस्यैवोदाहरणं वाच्यम्, अर्थशक्तेरपि व्यापारात्। अन्यथा केवलशब्दशक्तेर्वस्तुमात्रध्वन्य न स्यात्। अनेनैव आशयेन शब्दशक्तिमूलं वस्तुध्वनिं ध्वनिकृत् नाङ्गीकृतवान् इत्युक्तप्रायम् ॥—*Op. cit*, p. 36.

### TEXT

**§३७। अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः स प्रकाशते।**
**यस्तात्पर्येण वस्त्वन्यद् व्यनक्त्युक्तिं विना स्वतः ॥२२॥**

यत्रार्थः स्वसामर्थ्यादर्थान्तरमभिव्यनक्ति शब्दव्यापारं विनैव सोऽर्थशक्त्युद्भवो नामानुस्वानोपमव्यङ्ग्यो ध्वनिः। यथा—

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती ॥

अत्र हि लीलाकमलपत्रगणनमुपसर्जनीकृतस्वरूपं शब्दव्यापारं विनैवार्थान्तरं व्यभिचारिभावलक्षणं प्रकाशयति। न चायमलक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेर्विषयः। यतो यत्र साक्षाच्छब्दनिवेदितेभ्यो विभावानुभावव्यभिचारिभ्यो रसादीनां प्रतीतिः, स तस्य केवलस्य मार्गः। यथा कुमारसंभवे मधुप्रसंगे वसन्त-

पुष्पाभरणं वहन्त्या देव्या आगमनादिवर्णनं मनोभवशरसंधानपर्यन्तं शम्भोश्च परिवृत्तधैर्यस्य चेष्टाविशेषवर्णनादि साक्षाच्छब्दनिवेदितम्। इह तु सामर्थ्याक्षिप्तव्यभिचारिमुखेन रसप्रतीतिः। तस्मादयमन्यो ध्वने. प्रकारः।

यत्र च शब्दव्यापारसहायोऽर्थोऽर्थान्तरस्य व्यञ्जकत्वेन उपादीयते स नास्य ध्वनेर्विषयः। यथा—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥

अत्र लीलापद्मनिमीलनस्य व्यञ्जकत्वमुक्त्यैव निवेदितम् ॥

## EXPOSITION

§ 37. Ānandavardhana now takes up the other variety of संलक्ष्यक्रमध्वनि based on *material significance* (अर्थशक्ति). In the case of अर्थशक्तिमूलध्वनि it is the *matter* that is more important than the words expressive of it In शब्दशक्ति* the change of the श्लिष्ट word would be accompanied by the absence of the suggested sense But we must note one thing—viz that in the case of *material suggestiveness* (अर्थशक्तिमूलध्वनि), a knowledge of प्रकरण, वक्तृ बोद्धव्य etc besides that of the *matter* itself is *absolutely necessary* for the comprehension of the suggested sense As Mammaṭa notes —

"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः।
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥"—*Op cit* III 1-2

As Abhinavagupta observes later on in commenting on 'दृष्ट्या केशव—' as an example of उभयशक्तिमूलध्वनि—'शब्दशक्तिस्तावद् गोपरागादिशब्दश्लेषवशात्। अर्थशक्तिस्तु प्रकरणवशात्। यावदत्र राधारमणस्य अखिलतरुणीजनच्छन्नानुरागगरिमास्पदत्वं न विदितं तावदर्थान्तरस्याप्रतीतेः ॥'—*Locana*, pp 253-

254. Rūyyaka, too, follows Abhinavagupta in distinguishing between the two divisions. *Vide* his remarks on उभयशक्तिमूलध्वनि in the extracts quoted above.

'अर्थशक्त्युद्भवः . . . स्वतः'—Comp. *Locana* : "एवं शब्दशक्त्युद्भवं ध्वनिमुक्त्वाऽर्थशक्त्युद्भवं दर्शयति—अर्थेति । अन्य इति शब्दशक्त्युद्भवात् । स्वतस्तात्पर्येणेत्यभिधाव्यापारनिराकरणपरमिदं पदं ध्वननव्यापारमाह, न तु तात्पर्यशक्तिम् । सा हि वाच्यार्थप्रतीतावेवोपक्षीणा इत्युक्तं प्राक् । अनेनैवाशयेन वृत्तौ व्याचष्टे—यत्रार्थः स्वसामर्थ्यात् इति । स्वत इति शब्दः स्वशब्देन व्याख्यातः । व्यक्ति विनक्ति व्याचष्टे—शब्दव्यापारं विनैवेति ।।"—*Op. cit.*, pp. 247-48. The suggested sense thus based on *material significance* ( अर्थशक्ति ) must not be *expressed* or *hinted at* by any particular word or words. We have already discussed this topic in a previous section.

यथा . . . . विषयः—Ānandavardhana cites the *Kumārasambhava* verse 'एवंवादिनि—' as an instance of अर्थशक्तिमूल-भावध्वनि of the संलक्ष्यक्रम type. Though रस, भाव etc. are generally classed as अक्रम, yet under certain circumstances they might be classed with वस्तु and अलंकार as falling within the domain of the संलक्ष्यक्रम category.

यतो . . . . ध्वनेः प्रकारः - Where the विभाव's, अनुभाव's and व्यभिचारिभाव's, are clearly stated in all their details, the *emotion* suggested therefrom would be regarded as असंलक्ष्यक्रमव्यङ्ग्य. But when the apprehension of the व्यभिचारिभाव or any of the constituent factors be delayed, the रस suggested, would be classed as संलक्ष्यक्रमव्यङ्ग्य. Compare *Locana* :—

"साक्षादिति—व्यभिचारिणा यत्रालक्ष्यक्रमतया व्यवधिवत्स्यैव प्रतिपत्तिः स्वविभावादिबलात्, तत्र साक्षात् शब्दनिवेदितत्वं विवक्षितम् इति न पूर्वापरविरोधः । पूर्वं हि उक्तम् व्यभिचारिणामपि

भावत्वान्न स्वशब्दतः प्रतिपत्तिरित्यादि विस्तरतः। " एतदुक्तं भवति—यद्यपि रसभावादिरर्थो ध्वन्यमान एव न वाच्यः कदाचिदपि तथापि न सर्वोऽलक्ष्यक्रमस्य विषयः। यत्र हि विभावानुभावेभ्यः स्थायिगतेभ्यो व्यभिचारिगतेभ्यश्च पूर्णेभ्यो झटित्येव रसव्यक्तिस्तत्रास्त्वलक्ष्यक्रमः। यथा—

'निर्वाणभूयिष्ठमथास्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन।
अनुप्रयाता वनदेवताभिरदृश्यत स्थावरराजकन्या॥'

—इत्यादौ सम्पूर्णालम्बनोद्दीपनविभावतायोग्यस्वभाववर्णनम्।

'प्रतिग्रहीतुं प्रणयिप्रियत्वात् त्रिलोचनस्तामुपचक्रमे च।
सम्मोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम्॥'

—इत्यनेन विभावतोपयोग उक्तः।

'हरस्तु किञ्चित् परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि॥'

—अत्र हि भगवत्याः प्रथममेव तत्प्रवणत्वात् तस्य चेदानीं तदुन्मुखीभूतत्वात् प्रणयिप्रियतया च पक्षपातस्य सूचितस्य गाढीभवदवस्थात्मनः स्थायिभावस्य औत्सुक्यावेगचापल्यहर्षादेश्च व्यभिचारिणः साधारणीभूतोऽनुभाववर्गः प्रकाशित इति विभावानुभावचर्वणैव व्यभिचारिचर्वणायां पर्यवस्यति। व्यभिचारिणां पारतन्त्र्यादेव स्रक्सूत्रकल्पस्थायिचर्वणाविश्रान्तेरलक्ष्यक्रमत्वम्। इह तु पत्रदलगणनमधोमुखत्वं च अन्यथापि कुमारीणां सम्भाव्यत इति झटिति न लज्जायां विश्रमयति हृदयम्, अपि तु प्राग्वृत्ततपश्चर्यादिवृत्तान्तानुस्मरणेन तत्र प्रतिपत्तिं करोति—इति क्रमव्यङ्ग्यतैव। रसस्त्वत्रापि दूरत एव व्यभिचारिस्वरूपे पर्यालोच्यमाने भातीति तदपेक्षयाऽलक्ष्यक्रमतैव। लज्जापेक्षया तु तत्र लक्ष्यक्रमत्वम्। अमुमेव भावमेवशब्दः केवलशब्दश्च सूचयति॥"—*Op cit* pp 248 49

यत्र च ..उक्त्यैव निवेदितम्—In the verse 'तद्धेतयाल-

मनसम्—" the sense suggested by the act of closing the lotus petals—viz the time of assignment of the lovers after sunset has been hinted at by the expression 'सङ्केतकालमनसं विट—' and as such it cannot be regarded as a case of अर्थशक्तिमूलवस्तुध्वनि. Comp °*Locana* उक्तिं विना-इति यदुक्तं तद्व्यवच्छेदं दर्शयितुमुपक्रमते—यत्र चेति । च शब्दस्तुशब्दस्यार्थे । अस्येति । अलक्ष्यक्रमस्तु तत्रापि स्यादेवेति शेषः । उक्त्यैवेति । आद्यपादद्वयेन इत्यर्थः । यद्यपि चात्र शब्दान्तरसंनिधानेऽपि प्रदोषार्थं प्रति न कस्यचिदभिधाशक्तिः पद्मस्येति व्यञ्जकत्वं न विघटितं तथापि शब्देनैव उक्तम् अयमर्थोऽर्थान्तरस्य व्यञ्जक इति । ततश्च ध्वनेर्यद् गोप्यमानतोदितचारुत्वात्मकं प्राणितं तदपहस्तितम् । यथा कश्चिदाह—'गम्भीरोऽहं न मे कृत्यं कोऽपि वेद न सूचितम् । किंचिद् ब्रवीमि'-इति । तेन गम्भीर्यसूचनार्थं प्रत्युत आविष्कृत एव । अत एवाह-व्यञ्जकत्वमिति उक्त्यैवेति च ॥—*Op cit*, pp. 250 51 *See* also Jagannatha's remarks in his *Rasagangadhara*, pp 250-51, where the verse has been cited

## TEXT

§ ३८ । तथा च—

शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः ।
यत्राविष्क्रियते स्वोक्त्या साऽन्यैवालंकृतिर्ध्वनेः ॥२३॥

शब्दशक्त्याऽर्थशक्त्या शब्दार्थशक्त्या वाक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनर्यत्र स्वोक्त्या प्रकाशीक्रियते सोऽस्मादनु-

---

1 The verse has been cited as an instance of the figure of speech सूक्ष्म in the *Kavyaprakāsa*, Ullasa X Compare: 'अत्र नवीनसाहरूपेणङ्गितेन लक्षितं कामिनं सङ्केतकालाभिलाषं कामिन्या निशासूचकेन पद्मसंमीलनेन लीलया प्रकाशितं'—*Govinda Thakkura's* °*Pradipa*

स्वानोपमव्यङ्ग्याद् ध्वनेरन्य एवालंकारः। अलक्ष्यक्रमव्यङ्ग्यस्य वा ध्वनेः सति संभवे स तादृगन्योऽलंकारः॥ तत्र शब्दशक्त्या यथा—

वत्से ! मा गा विषादं श्वसनमुरुजवं सन्त्यजोर्ध्वमवृत्तं
कम्पः को वा गुरुस्ते भवतु बलभिदा जृम्भितेनात्र याहि ।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद् वः स दहतु दुरितं मन्थमूढां पयोधिः॥

अर्थशक्त्या यथा—

अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथाऽत्र ।
अस्मिन् पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥

उभयशक्त्या यथा-'दृष्ट्या केशव—' इत्यादौ॥

## EXPOSITION

§ 38. In the preceding sections the two divisions of संलक्ष्यक्रमव्यङ्ग्य—viz. शब्दशक्तिमूलध्वनि and अर्थशक्तिमूलध्वनि have been already defined and illustrated. And it had also been noted in that connection that *the suggested sense* should in no way be *stated* in words—which would take away its claim to be included in the domain of ध्वनि. In the present *Kārikā* the Dhvanikāra makes similar observation with regard to the third variety of संलक्ष्यक्रमध्वनि—viz. शब्दार्थोभयशक्तिमूलध्वनि, in which शब्द and अर्थ conjointly suggest a particular sense. Thus there *must* be one or more श्लिष्ट words besides others that are not so (*see* Abhinavagupta's remarks already quoted), in a case of उभयशक्तिमूलध्वनि. So it is *a priori* evident that the *unit* of उभयशक्तिमूलध्वनि must be *a sentence* or *a compound* expression, consisting of more than one component, some of which must be श्लिष्ट

and consequently *irreplaceable* ( परिवृत्त्यसह ) by synonyms. As Govinda observes in his commentary on the verse—'अतन्द्रचन्द्राभरणा—' cited by Mammaṭa as an illustration of उभयशक्तिमूलध्वनि : "अत्र श्यामारूप-कामिनीविशेष-रजन्योरुपमा व्यङ्ग्या । सा च अतन्द्रचन्द्रेत्यादेः परिवृत्त्यसहतया, समुद्दीपितेत्यादेस्तत्सहतया च यस्यापि व्यञ्जकत्वेन शब्दार्थोभयशक्तिमूला ।।"[1]—*Pradīpa*, p. 10[2] Hemacandra in his *Kāvyānuśāsana*, however, does not record उभयशक्तिमूल as a separate variety at all and includes it under शब्दशक्तिमूलध्वनि itself. He quotes 'अतन्द्रचन्द्राभरणा—' as an instance of शब्दशक्तिमूलालङ्कारध्वनि. Compare : अत्र शब्दशक्त्या रात्रियोषितोरुपमा व्यङ्ग्या । यद्यपि समुद्दीपितेति सानन्दमिति चार्थो व्यञ्जकस्तथापि न शब्दशक्तिविनाऽर्थशक्तिरुन्मीलतीति शब्दशक्तिरेव प्रधानम् ।।—*Op. cit.*, p.

1. वाक्ये द्व्युत्थ '—*K.P.*, IV. 19.

2 The following extract from 'प्रभा, a gloss on 'प्रदीप by Vaidyanātha Tatsat, is important ' उभयस्यापीति प्राधान्येनेति शेषः । तेन शब्दशक्तिमूलेऽप्यर्थस्य व्यञ्जकत्वेऽपि तस्य प्राधान्याभावात् नोभयशक्तिमूलत्वम् । परिवृत्त्यसहशब्दप्राचुर्ये च शब्दशक्तिप्राधान्यम् परिवृत्तिसहशब्दप्राचुर्ये त्वर्थशक्तिप्राधान्यम् तत्साम्ये तूभयशक्तिप्राधान्यादुभयशक्तिमूलत्व व्यपदिश्यते । अतएव, 'पन्थिअ ण एत्थ—' इत्यादौ उपभोगक्षमोऽसि चेदास्स्वेत्यादिवस्तुव्यञ्जने सत्थरपओहरशब्दयोरेव परिवृत्त्यसहयो प्राधान्यम् , न तु पथिकाद्यर्थस्येति न तत्र उभयशक्तिमूलवस्तुध्वनि । किं तु तदाहरणजातीयेषु अलङ्कारध्वनिरित्येक इत्युक्तम्—*loc cit.* We should note that according to Mammaṭa's view अलङ्कार *alone* can be suggested *conjointly* by शब्द and अर्थ, and not वस्तु As he states : 'शब्दार्थोभयभूरेक —', IV. 18. But this view is contrary to the position of Rūyyaka and Dhvanikāra as well, who includes वस्तुध्वनि too as one of the varieties of अर्थशक्तिमूलध्वनि. See Rūyyaka's statements cited above.

42 Mānikyacandra in his *Samketa* on *Kāvyaprakāśa* follows Hemacandra As he notes : अत्र चातन्द्रचन्द्रादिशब्दानामेकानेकार्थानाम् परावृत्तिसहासहत्वेन क्रमेण अर्थशब्दशक्तिप्राधान्यम्, तेनोभयमूलत्वम्। तथाऽत्र यद्यपि अर्थोऽपि व्यञ्जकस्तथापि श्लिष्टशब्दशक्तिरेव व्यङ्ग्यमुन्मीलयति नार्थशक्तिरिति शब्दोत्थध्वनिरेव न द्व्युत्थ इति तत्त्वम्॥—*Op, cit*, p. 119.

Jagannātha very ably summarises the different views in the following passage of the *Rasagangādhara* . यद्यपि शब्दशक्तिमूलकत्वं अर्थशक्तिमूलकत्वं चेत्युभयमपि सकलव्यङ्ग्यसाधारणम्, शब्दार्थयोरनुसंधानं विना व्यङ्ग्यस्यैवानुल्लासात्, तथापि परिवृत्त्यसहिष्णूनां शब्दानां प्राचुर्ये तत्प्रयुक्तात् प्राधान्यात् सत्या अप्यर्थशक्तेरप्राधान्याच्च व्यङ्ग्यस्य शब्दशक्तिमूलकत्वेनैव व्यपदेशः। परिवृत्तिसहिष्णूनां तु प्राचुर्येऽर्थशक्तेरेव प्राधान्यात् सत्या अपि शब्दशक्तेः प्रधानानुगुण्यार्थतया मल्लग्रामादिवत् प्रधानेनैव व्यपदेशः। यत्र तु काव्ये परिवृत्तिसहमानानामसहमानानां च शब्दानां नैकजातीयप्राचुर्यम्, अपि तु साम्यमेव, तत्र शब्दार्थोभयशक्तिमूलकस्य व्यङ्ग्यस्य स्थितिरिति द्व्युत्थो ध्वनिः। न चायं शब्दशक्तिमूलकतयैव अर्थशक्तिमूलकतयैव वा व्यपदेष्टुं शक्यः, विनिगमकाभावात्। नापि शब्दशक्तिमूलकार्थशक्तिमूलकयोः संकरेण गतार्थयितुम्, व्यङ्ग्यभेद एव संकरस्येष्टेः; इह तु व्यङ्ग्यस्यैक्येन तस्यानुत्थानात्।....अयं च वाक्यमात्रे। पदसमूहश्च वाक्यम्। तेनास्य नानार्थानानार्थघटितसमासविषयत्वेऽपि न विरोधः।[1] न तु शुद्धैकपदे, तस्मिन् नानार्थानानार्थयोरसमावेशात्। अन्ये तु—'अर्थशक्तिमूलकत्वव्यपदेशो नानार्थप्रकाशकशब्दशयुल्लास्यत्वसामान्यशून्यत्वं तन्त्रम्, विषयप्राचुर्यात्। शब्दशक्ति-

1 तस्यापि समासान्तरपदत्वमादाय पदसमूहत्वादिति भावः—Nagoji Bhatta's gloss

मूलकत्वव्यपदेशो तु नार्थशक्त्युल्लासयत्वताभाव्यशून्यत्वं तथा ; विषयदौर्लभ्यापत्ते. । न हि नानार्थशब्दमात्रघटितपद्यं प्रचुरविषयम् । अत. शब्दशक्तिमूलकत्वेनैवायं शक्यव्यपदेशो ध्वनि.—इत्यप्याहुः । —*Op. cit.*, pp. 172-174.

शब्दशक्त्या . . . . अलंकार:—When the sense suggested through शब्दशक्ति, अर्थशक्ति or उभयशक्ति, is again *expressed* in words, it is reduced to a more poetic figure from the status of ध्वनि. Or, if there be any असंलक्ष्यक्रमध्वनि—like रस, भाव etc. besides the suggested sense in question, the latter becomes a sort of embellishment somewhat different from the common poetic figures and enhances the effect of the former (viz. रस, भाव etc. ). Ānandavardhana has noted these two alternative interpretations of the present *Kārikā*. In the first case ध्वने must be in the *ablative* case, in the second it is in the *genitive*. Compare °*Locana*: प्रकान्तप्रकारद्वयोपसंहार तृतीयप्रकारसूचनं चैकेनैव यत्नेन करोमीत्याशयेन साधारणमवतरणपदं प्रक्षिपति वृत्तिकृत्—तथा चेति । तेन चोक्तप्रकारद्वयेनायमपि तृतीय प्रकारो मन्तव्य इत्यर्थ. । शब्दार्थौ चेत्येकशेष. । साऽन्यैवेति । न ध्वनिरसौ, अपि तु श्लेषादिरलंकार इत्यर्थ. । अथवा ध्वनिशब्देन अत्र...यस्य तस्य अलंकार्यस्याभिन. स व्यङ्ग्योऽर्थोऽन्यो वाच्यमात्रालंकारापेक्षया द्वितीयो लोकोत्तरश्चालंकार इत्यर्थ. । एवमेव वृत्तौ द्विधा व्याख्यास्यति ॥—*Op cit.*, pp. 251-52

यत्से . . . . . पयोधि—°*Locana* explains the verse as follows : विषमत्तीति विषादः । उरुजम्भहृत्तम् अग्निमित्यत्र पार्थो मन्तव्य । कल्पोऽसा पनि फो यता या तव गुरुः । यन्भिदा इन्द्रेण जृम्भितेन ऐश्वर्यमदमत्तेनेत्यर्थः । जृम्भितं चात्र गात्रमर्दनात्मकं यत्सं भिनत्ति आयासकारित्वात् । प्रत्याख्यानमिति पपर्ण-

वात्र द्वितीयोऽर्थोऽभिधीयत इति निवेदितम् । **कारयित्वेति** । सा हि कमला पुण्डरीकाक्षमेव हृदये निधायोत्थितेति स्वयमेव देवान्तराणां प्रत्याख्यानं करोति । स्वभावसुकुमारतया तु मन्दरान्दोलितजलधितरङ्गभङ्गपर्याकुलीकृतां तेन प्रतिबोधयता तत्समर्थाचरणम् अन्यत्र दोषोद्घाटनेन अत्र याहीति चाभिनयविशेषेण सकलगुणादरदर्शनेन कृतम् । अत एव **मन्थमूढामित्याह** । इत्युक्तप्रकरेण भयनिवारणव्याजेन सुराणां प्रत्याख्यानं मन्थमूढां लक्ष्मीं कारयित्वा पयोधिर्यस्मै तामदात् स वो युष्माकं दुरितं दहत्विति संबन्धः.—*Op. cit.*, pp. 252-53.

'अम्बा....व्याजपूर्वम्'—व्याजशब्दोऽत्र स्वोक्तिः -*Locana.*

'दृष्ट्या... चिरम्'—सलेशमिति चात्र स्वोक्तिः—*Locana.*

TEXT

§ ३९ । प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः ।
अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः ॥२४॥

अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थ उक्तस्तस्यापि द्वौ प्रकारौ - कवेः कविनिबद्धस्य वा वक्तुः प्रौढोक्तिमात्रनिष्पन्नशरीर एकः, स्वतःसम्भवी च द्वितीयः ॥ कविप्रौढोक्तिमात्रनिष्पन्नशरीरो यथा—

सज्जेइ सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे ।
अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स शरे ॥

कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो यथोदाहृतमेव- 'शिखरिणि—' इत्यादि । यथा वा—

साअरविइण्णजोव्वणहत्थावलम्बं समुण्णमन्तेहिं ।
अब्भुट्ठाणं विअ मम्महस्स दिण्णं तुह थणेहिं ॥

स्वतःसम्भवी य औचित्येन बहिरपि सम्भाव्यमानसद्भावो न

केवलं भणितिवशेनैवाभिनिष्पन्नशरीरः। यथोदाहृतम्—'एवं-वादिनि—' इत्यादि। यथा वा—

सिहिपिञ्छकण्णपूरा जाआ वाहस्स गव्विरी भमइ।
मुत्ताफलरइअपसाहणाणं मज्झे सवत्तीणं॥

## EXPOSITION

§ 39. Ānandavardhana classifies *suggestion based on material significance* ( अर्थशक्तिमूलध्वनि ) into *three* categories according as the *matter* (अर्थ) concerned is objectively possible ( स्वतःसम्भवी ) or invented by the poet's own imaginative faculty ( कविप्रौढोक्तिनिष्पन्न ) or again brought into being not by the poet's fancy but by the imagination of some one among the characters created by the poet—the creatures of the poet's Muse ( कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्न ). Mammaṭa follows the Dhvanikāra without trying to justify the plausibility of the above classification See *Kāvyaprakāśa*, IV. 16-17. But Hemacandra in his *Kāvyānuśāsana* contends that this classification is unnecessary and incongruous inasmuch as the three above mentioned varieties have the essential property of being the outcome of poetic fancy common to all of them. Even matters that are objectively real *per se* cannot find place in a true poetic art if they are not transfigured by the poet's imagination. As he remarks. "इह चार्थः स्वतःसम्भवी, कवि-प्रौढोक्तिमात्रनिष्पन्नशरीरः, कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्न-शरीरो वा—इति भेदत्रयम् न व्याख्येयम्। कविप्रौढोक्तिमात्रनिर्मित-त्वेनैव साध्यसिद्धेः। प्रौढोक्तिमन्तरेण स्वतःसम्भविनोऽपि अकि-ञ्चित्करत्वात्। कविप्रौढोक्तिरेव च कविनिबद्धवक्तृप्रौढोक्तिरिति किं प्रपञ्चेन"—*Op cit*, p 46 Māṇikyacandra in his *Saṃketa* follows Hemacandra Jagannātha in his *Rasagaṅgādhara* criticises the threefold classification, though he recognises the first variety—viz. स्वतःसम्भवी. According to him the last

two varieties should be really classed under one single head. Compare his remarks: प्रतिभानिर्मितत्वाविशेषाच्च कवि-तदुम्भितवक्तृ-प्रौढोक्तिनिष्पन्नयोरर्थयोः न पृथग्गणनोचिता, उम्भितोम्भितादेरपि भेदान्तरप्रयोजकतापत्तेः। न च तस्यापि कव्युम्भितत्वानपायात् तत्प्रयोज्यभेदान्तर्गतत्वमेवेति वाच्यम्। प्रथमोम्भितस्यापि लोकोत्तरवर्णनानिपुणत्वलक्षणकवित्वानपायात् पृथग्भेदप्रयोजकताऽनुपपत्तेः।—*Op. cit.*, pp. 134. Nāgojī Bhaṭṭa, however, in his comments on the above text of the *Rasagaṅgādhara* upholds the view of the Dhvanikāra. As he observes:—

"वृद्धोक्तिविषयात् शिशूक्तिविषय इव कव्युक्तिविषयात् कविनिबद्धोक्तिविषये चमत्काराधिक्यानुभाविकत्वात् पृथगुक्तिः। ततः परञ्च प्रतिनिधानसाध्यप्रतीतिकतया चमत्कारस्थगनात् नोम्भितोम्भितादेः पृथग्गणनेति तु नव्याः॥—*loc. cit.* The following observations of Rūyyaka in his *Kāvyaprakāśasaṅketa* in this connection are important and worth perusal: "ननु स्वतःसंभविप्रभृतयो यदि व्यञ्जकार्थगतत्वेन भेदा उच्यन्ते तत् केवलयोर्वाच्यलक्ष्ययोरपि भेदत्वेन किमिति न कथ्यन्तेऽविशेषात्। अथ व्यञ्जनोपयोगितया तेषां भेदत्वं तर्हि व्यञ्जनस्योभयत्र दत्तपादत्वाद् व्यङ्ग्यार्थगतत्वेनापि किमिति नाभिधीयन्ते। उच्यते—निमित्ताभिप्रायेणोक्तत्वात्। व्यञ्जकत्वं हि तन्निमित्तं न व्यङ्ग्यत्वम्। तथाहि कश्चिदर्थः कविनिबद्धेन वक्त्रा प्रौढोक्त्या प्रतिपादित इति व्यञ्जको न कविप्रतिपादितो नापि स्वतःसंभवेन। यथा 'शिखरिणि क्व नु नाम'त्यादौ रागित्वमन्तरेण तस्यार्थस्य अवचनार्हत्वात्, अर्थान्तरं प्रति व्यञ्जकत्वाभावाच्च। कश्चित्तु कविनिबद्धोक्तिमनपेक्ष्यैव कविप्रौढोक्तिप्रतिपादित इत्येव व्यञ्जको न स्वतःसंभवेन यथा 'सज्जइ सुरहिमासो—' इत्यादावुदाहृतो बहिःसंभवाभावे, न स्वतःसंभवी, नापि कविनिबद्धं वक्तारमपेक्षते, वक्तुरावेशाभावात्।

कविप्रजापतिः प्रौढि-निर्मितत्वेन तु अर्थान्तरं व्यनक्ति। कश्चित् पुनर्बहिरपि भावात् स्वतःसंभवेन व्यञ्जको यथा 'एवंवादिनी'-त्यादौ स्वयंकृतप्रचुरं लोकव्यवहारे स्थितः, तथाविधस्त्र व्यञ्जकत्वेन प्रतीयते। लज्जा चात्र व्यभिचारिभूताऽपि विभावानुभावयोरतिचारुत्वेन प्रतीतिविश्रान्तिस्थानत्वात् प्रतिपाद्यमाना सती वस्तुत्वेन व्यवहृता, न भावत्वेन। तेनार्थशक्तिमूलस्य वस्तुध्वनेरिदमुदाहरणम्, नासंलक्ष्यक्रमस्य भावध्वनेः। तस्माद् व्यञ्जकस्यैवार्थस्य व्यञ्जने निमित्तत्वात् स्वतःसंभविप्रभृतयो भेदा उक्ताः, न व्यङ्ग्यार्थगतत्वेनापीति ॥"—*Op. cit.*, pp. 31-32.

'कविप्रौढोक्ति....अणङ्गस्य शरे—Abhinavagupta explains the *gāthā*: 'सज्जेइ सुरहिमासो—' as follows: अत्र वसन्तश्चेतनाऽनङ्गस्य सर्वा सज्जयति केवल, न तावदर्पयति-इत्येवंविधया समर्पयितव्यवस्त्वर्पणकुशलयोक्त्या सहकारोद्भेदिनी वसन्तदशा यत उक्ता अतो ध्वन्यमानं मन्मथोन्माथस्यारम्भं क्रमेण गाढगाढीभविष्यन्तं व्यनक्ति। अन्यथा 'वसन्ते सपल्लवसहकारोद्गम' इति वस्तुमात्रं न व्यञ्जकं स्यात्। एषा च कवेरेवोक्तिः प्रौढा ॥[1]—*Op. cit*, p. 255.

'कविनिबद्ध....इत्यादि'—The verse 'शिखरिणि—' has been already cited in the first Uddyota. 'अत्र लोहितं बिम्बफलं शुको ददातीति न व्यञ्जकता काचित्। यदा तु कविनिबद्धस्य कामिनस्य तरुणस्य वक्तुरियं प्रौढोक्तिस्तदा व्यञ्जकत्वम्'—*ibid.*

---

1. Mahimabhaṭṭa thus establishes the inferential nature of the suggested sense 'सज्जेइ—' इत्यत्र कविप्रौढोक्तिमात्रनिष्पन्नशरीरे सुरभिमाससंभवानाम् आविर्भूताभिनवचूतबाणानाम् सम्पादितविरहिविधुरयुवतिजनमदनोन्मादसामर्थ्यमनुमेयम्। तत्र च सहकार-सुरभिमास-मदनानां रूपकोपनिबन्धनं सहकारस्य-शरानुपमसुमनसुगन्धानां गति यथासम्भवमपूर्वस्वरूपा गमयति सहकाराणां मदनाभिनवाण्यविगमनमनस्तं प्रति हेतु। मन्दरोदीपनपदं रसनात्वगंभावमेव च तेषां सुरभिमासेन मन्दरोदीपनकर्मादिनान्यदिति—*Op. cit.*, p. 451.

'साअर थणेहिं'—See °*Locana* for an explaination of this Prakrit stanza स्तनौ तावदिह प्रधानभूतौ ततोऽपि गौरवित कामस्ताभ्यामभ्युत्थानेनोपचर्यते । यौवनं चानयो परिचारकभावेन स्थितमित्येवविधेन उक्तिवचित्र्येण त्वदीयस्तनावलोकनप्रबुद्धमन्मथावस्थ को न भवतीति भङ्ग्या स्वाभिप्रायध्वनन कृतम् । तव तारुण्येनो नतौ स्तनौ इति हि वचने न व्यञ्जकता ।'—p 256

सिहिपिञ्छ सवत्तीण'—Comp °*Locana* शिखिमात्रमारणमेव तदासक्तस्य कृत्यम् । अन्यासु तु आसक्तो हस्तिनोऽपि अमारयत् इति हि वचनेन उक्तमुत्तमसौभाग्यम् । रचितानि विविधभङ्गीभि प्रसाधनानि इति तासा सभोगव्यग्रिमाभावात तद्विरचनशिल्पकौशलमेव परमिति दौर्भाग्यातिशय इदानीमिति प्रकाशितम् । गर्वश्च बाल्याविवेकादिनाऽपि भवति इति नात्र स्वोक्तिसद्भाव शङ्क्य । एष चार्थो यथा यथा वर्ण्यते आस्ता वा वर्णना, बहिरपि यदि प्रत्यक्षादिनाऽवलोक्यते तथा तथा सौभाग्यातिशय व्याधवध्वा द्योतयति ।।—p 257 Thus the suggestiveness of a स्वत सभवी *matter* ( वस्तु ) is irrespective of any poetic description and imaginative remoulding as the closing statement in the above extract from °*Locana* makes it sufficiently clear *Vide* the observation of Mahimabhatta on this *gāthā* सिहिपिञ्छ—' इत्यत्र नवोढाया व्याधवध्वा सपत्नीभ्य सौभाग्यातिरेकोऽनुमेय । तत्र चास्या शिखिपिच्छकर्णपूराया अपि सगर्व भ्रमण हेतु । यतो ऽयमभिप्रायस्त्वस्या —मयि सत्यामय सभोगैकरसिको व्याधो वारितान्यारंभो दिवानिश मत्परायण एव केवल मद्विनोदार्थ यद् च्छयाऽस्तिकं पतितमयूरमात्रमारणव्यापारो वर्तते इति शिखिपिच्छमात्रकर्णपूराऽह जाता । भवतीषु सतीषु दूरदेशमालम्ब्यवधासाध्यमहारम्भमातङ्गमारणादिव्यापाररतिरयमासीदिति मुक्ताफलरचित प्रसाधना भवत्य इति । तत्र यदनत् सगर्व भ्रमण तदेव तस्या सपत्नीभ्य सौभाग्यातिरेकमनुमापयति इत्ययमेयम्' —*Op cit*, p 452

## TEXT

§ ४०। अर्थशक्तेरलंकारो यत्राप्यन्यः प्रतीयते ।

अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥२५॥

वाच्यालङ्कारव्यतिरिक्तो यत्रान्योऽलङ्कारोऽर्थसामर्थ्यात् प्रतीयमानोऽवभासते सोऽर्थशक्त्युद्भवो नामानुस्वानरूपव्यङ्ग्योऽन्यो ध्वनिः ॥

## EXPOSITION

§ 40 In the illustrations already cited in the previous section dealing with the *two* (or *three*) divisions of अर्थशक्तिमूलध्वनि, the suggested sense was in the nature of a mere *fact* (वस्तुमात्र) In the present section the Dhvanikara observes that there are cases of अर्थशक्तिमूलध्वनि where the content of suggestion is an अलंकार, as in the case of शब्दशक्तिमूलध्वनि already discussed in details What more, in अर्थशक्तिमूलध्वनि, the *suggestive matter* (व्यञ्जकोऽर्थ) itself might be a *mere fact* (वस्तुमात्र) or an *'imaginative mood'* partaking of the characteristics of a distinct poetic figure (अलङ्कृत वस्तु) So, just as a वस्तु might give rise to the *comprehension of some other वस्तु or अलंकार, so also a* particular अलंकार might in its part similarly suggest both वस्तु and अलंकार Comp *'Locana* एवमर्थशक्त्युद्भवो द्विभेदो वस्तुमात्रस्य व्यञ्जनीयत्वे वस्तुध्वनिरूपतया निरूपितः । इदानीं तस्यैव अलङ्काररूपे व्यञ्जनीयेऽलङ्कारध्वनित्वमपि भवति इत्याह— अर्थेत्यादि। न केवलं शब्दशक्तेरलङ्कारः प्रतीयते पूर्वोक्तनीत्या यावदर्थशक्तेरपि। यदि वा न केवलं यत्र वस्तुमात्रं प्रतीयते यावदलङ्कारोऽपि इत्यपिशब्दार्थः । अन्यशब्दं व्याचष्टे—वाच्येति।' —*Op cit*, p 257

## TEXT

§ ४१। तस्य भविरलविषयत्वमाशङ्क्येदमुच्यते—

**रूपकादिरलंकारवर्गो यो वाच्यतां श्रितः ।**
**स सर्वो गम्यमानत्वं बिभ्रद् भूम्ना प्रदर्शितः ॥२६॥**

अन्यत्र वाच्यत्वेन प्रसिद्धो यो रूपकादिरलंकारः सोऽन्यत्र प्रतीयमानतया बाहुल्येन प्रदर्शितस्तत्रभवद्भिर्भट्टोद्भटादिभिः । तथा च ससंदेहादिषूपमारूपकातिशयोक्तीनां प्रकाशमानत्वं प्रदर्शितमित्यलंकारान्तरस्यालंकारान्तरे व्यङ्ग्यत्वं न यत्नप्रतिपाद्यम् ॥

## EXPOSITION

§ 41. Poetic figures like उपमा, रूपक etc. are usually found as *expressed* ( वाच्य ), but they can also be *suggested* (व्यङ्ग्य). *See* notes on *Uddyota* I, Sec. §30 ff. Thus in the case of ससंदेह, उपमा is apprehended in the background through suggestion, and even ancient teachers like Bhāmaha, Udbhaṭa etc. have noted this phenomenon and it is not very difficult to demonstrate either. As *°Locana* remarks : सर्व इति प्रदर्शित इति च पदेन असंभावनाऽत्र मिथ्यैवेत्याह ।

उपमानेन तत्त्वं च भेदं च वदतः पुनः ।
ससंदेहं वचः स्तुत्यै ससंदेहं विदुर्यथा ॥ इति ॥

'तस्याः पाणिरयं नु मारुतचलत्पत्राङ्गुलिः पल्लवः'—इत्यादौ उपमा रूपकं वा ध्वन्यते । अतिशयोक्तेश्च प्रायशः सर्वालंकारेषु ध्वन्यमानत्वम् ॥"—*Op. cit.*, p. 258.

## TEXT

§ ४२ । इयत् पुनरुच्यत एव—

**अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।**
**तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥२७॥**

अलंकारान्तरेषु त्वनुरणनरूपालङ्कारप्रतीतौ सत्यामपि यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते नासौ ध्वनेर्मार्गः। तथा च दीपकादावलंकारे उपमाया गम्यमानत्वेऽपि तत्परत्वेन चारुत्वस्याव्यवस्थानान्न ध्वनिव्यपदेशः ॥

## EXPOSITION

§ 42. For instance, though in व्यतिरेक the apprehension of *similarity* lingers in the background, yet we would be wrong to regard it as an instance of उपमाध्वनि, for it is the *expressed contrast* that is more charming than the suggested similarity. Jagannātha in his *Rasagaṅgādhara* has a very illuminating note on this point : ननु अस्य अलंकारस्य ( viz. व्यतिरेकस्य ) वैधर्म्यमूलस्योपमाप्रतिकूलत्वमेवोचितम्, न तूपमागर्भत्वम्। तस्या साधर्म्यमूलकत्वात्। अस्य च तन्निषेधरूपेणैव प्रवृत्तेः। न चेष्टापत्तिः। सिद्धान्तभङ्गप्रसङ्गात्। सत्यम्। यद्गुणपुरस्कारेण यस्य यत्सादृश्यनिषेध उत्कर्षपर्यवसायी तस्य तद्गुणपुरस्कारेण तत्सादृश्यस्याप्रतिष्ठानेऽपि गुणान्तरेण सादृश्यप्रत्ययस्य दुर्वारत्वात्। यदि च तत्सादृश्यसामान्यनिषेधो विवक्षितः स्यात्, गुणविशेषपुरस्कारोऽनर्थकः स्यात्। धनेनायमस्मादधिक इत्युक्ते विद्यया रूपेण कुलेन च सम इति सर्वजनीनप्रत्ययात्। एवं च प्रतीयमानमपि सादृश्यं गुणान्तरकृतनिषेधोत्थमपि तेनोत्कर्षेण हतप्रभमिव बन्दीकृतमिव न चमत्कारविशेषमाधातुं प्रभवतीति प्राञ्चामाशयः ॥—*Op. cit.*, pp. 470-71. So also in the case of दीपक, रूपक etc. *Vide* notes on *Uddyota* I, Sec. §33.

## TEXT

§ ४३। यथा—

चन्दमऊएहि णिसा णलिणी कमलेहिं कुसुमगुच्छेहिं लआ ।
हंसेहि सरअसोहा कव्वकहा सज्जणेहि करइ गरुई ॥

—इत्याक्षिप्तोपमागर्भत्वेऽपि सति वाच्यालङ्कारमुखेनैव चारुत्वं व्यवतिष्ठते, न व्यङ्ग्यालङ्कारतात्पर्येण । तस्मात् तत्र वाच्यालङ्कारमुखेनैव काव्यव्यपदेशो न्याय्यः ॥

EXPOSITION

§ 43 'चन्दमऊएहि . गरुई'—Comp. *Locana* : चन्द्रमयूखादीनां निशादिना विना कोऽपि परभागलाभः । सज्जनानामपि काव्यकथां विना कीदृशी साधुजनता । चन्द्रमयूखैश्च निशाया गुरूकीकरणं भास्वरत्व-सेव्यत्वादि यत् क्रियते, कमलिन्या शोभापरिमल-लक्ष्म्यादि, कुसुमगुच्छैर्लताया अभिगम्यत्व-मनोहरत्वादि, हंसैः शारदशोभाया श्रुतिसुखमनोहरत्वादि, तत् सर्वं काव्यकथायाः सज्जनैरित्येतावानयमर्थो गुरु क्रियते इति दीपकबलादेवकास्ति कथाशब्द? इदमाह—आसतां तावत् काव्यस्य केचन सूक्ष्मा विशेषाः, सज्जनैर्विना काव्यमित्येव शब्दोऽपि ध्वंसते । तेषु च सत्स्वास्ते सुभगं काव्यशब्दव्यपदेशमात्रमपि शब्दसंदर्भमात्रम् । तथा हि क्रियते यथादरणीयतां प्रतिपद्यते इति दीपकस्यैव प्राधान्यं नोपमायाः ॥ *Op. cit.*, p. 260. All this is reiteration of what has been already discussed in the *Vṛtti* under *Kārikā* I.13.

यत्र तु व्यङ्ग्यपरत्वेनैव वाच्यस्य व्यवस्थानं तत्र व्यङ्ग्यमुखेनैव व्यपदेशो युक्तः । यथा—

प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥

यथा वा ममैव—

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि

क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः॥

एवंविधे विषयेऽनुरणनरूप-रूपकाश्रयेण काव्यचारुत्वव्यवस्थानाद्रूपकध्वनिरिति व्यपदेशो न्याय्यः॥

EXPOSITION

§ 44. Abhinavagupta explains रूपकध्वनि in the verse 'प्राप्तश्रीरेष—' as follows :— 'कस्मिंश्चिदनन्तबलसमुदायवति नरपतौ समुद्रपरिसरवर्तिनि पूर्णचन्द्रोदय-तदीयबलावगाहनादिना निमित्तेन पयोधेस्तावत् कम्पो जातः। सोऽनेन सन्देहेन उत्प्रेक्ष्यत इति, ससन्देहोत्प्रेक्षयोः सङ्करालंकारो वाच्यः। तेन च वासुदेवरूपता तस्य नृपतेर्व्यज्यते। यद्यपि चात्र व्यतिरेकोऽभाति, तथापि स पूर्ववासुदेवस्वरूपात्, नाद्यतनात्। अद्यतनत्वे भगवतोऽपि प्राप्तश्रीकत्वेन अनालस्येन सकलद्वीपाधिपति-विजयित्वेन च वर्तमानत्वात्। न च सन्देहोत्प्रेक्षानुपपत्तिबलाद् रूपकस्याक्षेपः, येन वाच्यालंकारोपस्कारकत्वं व्यङ्ग्यस्य भवेत्। यो हि सम्प्राप्तलक्ष्मीको निर्व्याज-

---

Kuntaka, as appears from the *Re'sume* (Unmesa, III) of the *Vakroktijīvita* prepared by Dr. De, cites the verse 'प्राप्तश्री:—' as an instance of प्रतीयमानव्यतिरेक ( *see* p. 208 ). Does Abhinavagupta here refer to this view of the author of the *Vakroktijīvita* ? In another place, Abhinavagupta appears to echo Kuntaka's observations. For example, the following passage of the *Locana* तथा हि 'तटी तारं ताम्यति'-इत्यत्र तटशब्दस्य पुंस्त्वनपुंसकत्वे अनादृत्य स्त्रीत्वमेवाश्रितं सहृदयैः 'स्त्रीति नामापि मधुरम्' इति कृत्वा (Op. cit. p. 359)—is closely reminiscent of *Vakroktijīvita*, II. २१—सति लिङ्गान्तरे यत्र स्त्रीलिङ्गं च प्रयुज्यते। शोभानिष्पत्तये यस्मान्नामैव स्त्रीति पेशलम्॥—and *Vṛtti* thereunder, in which the verse, of which तटी तारं ताम्यति is but a hemistich, is read in full.

विजिगीषाक्रान्तः स स मां मथ्नीयादित्याद्यर्थसंभावनात्। न च पुनरपीति भूय इति च शब्दैरयमाकृष्टोऽर्थः। पुनरर्थस्य भूयोऽर्थस्य च कर्तृभेदेऽपि समुद्रैक्यमात्रेणाप्युपपत्तेः। यथा पृथ्वी पूर्वं कार्तवीर्येण जिता पुनरपि जामदग्न्येनेति। पूर्वा निद्रा च सिद्धा राजपुत्राद्यवस्थायामपीति सिद्धं रूपकध्वनिरेवायमिति। शब्दव्यापारं विनैव अर्थसौन्दर्यबलाद्रूपणाप्रतिपत्तेः ॥—*Op. cit.*, pp. 162-53. Jagannātha however criticises Ānandavardhana and holds that the poetic figure भ्रान्तिमान् is suggested here. The knowledge of identity ( तादात्म्याध्यवसाय ) between the king and Lord Viṣṇu brought about by a conscious act of volition (आहार्य), which forms the basis of the figure of speech रूपक, cannot produce the feeling of terror, which can be caused only by an *illusion of identity* ( तादात्म्यभ्रान्ति ) that is spontaneous ( स्वारसिक ) and as such requires no aid of *volition* at all. Besides, the knowledge of identity and the feeling of terror, standing to each other in the relation of cause and effect, must coinhere in the same substratum, which however is not the case in the present illustration, the former being in the poet and the latter in the ocean. Thus रूपकध्वनि is absurd. As Jagannātha observes :—

"आनन्दवर्धनाचार्यास्तु—'प्राप्तश्रीः—' इत्यत्र रूपकाश्रयेण काव्यचारुत्वव्यवस्थापनाद्रूपकध्वनिरित्याहुः। तच्चिन्त्यम्। अत्र च जलधिकम्पहेतुत्वेन विकल्पत्रयं कल्प्यते। तच्च प्रकृते राजविशेष्यकां जलनिधिगतामनाहार्यविष्णुतादात्म्यज्ञानरूपां भ्रान्तिमेवाक्षिपति, न रूपकम्। तज्जीवातोराहार्यविष्णुतादात्म्यनिश्चयस्य कम्पाजनकत्वात्। कविजलधिगतत्वेन वैयधिकरण्याच्च। अज्ञातमेव केवलं विष्णुतादात्म्यं जलधेः कम्पेऽनुपयुक्तमेव। चमत्कारिण्यपि चात्र भ्रान्तिरेवेति ध्वनिरपि तस्या एव युक्तः ॥"—*Op. cit.*, pp. 327-28.

*Vide* Mahimabhaṭṭa's remarks "'प्राप्तश्री —'इत्यत्र लक्ष्मीलाभलम्पटतया पयोनिधौ मन्थनव्यथावितरण विलासालसतया योगनिद्रासुखास्वादो द्वीपान्तराधीशदशकन्धरनिधनधिया सेतुबन्धश्च इति भगवतो वासुदेवस्य अमी व्यापारा प्रसिद्धा सन्तो यदन्यत्र राजादौ आरोप्य तस्य समीहितप्राप्त्या निषिध्यन्ते तेन तत्कार्यत्वात् कारणभूतभगवद्रूपतारोपमेव तत्रानुमापयन्तीति एकानुमितिरिति व्यपदेश प्रवर्तत ।।"—*Op cit*, p 430

'लावण्य पयोधि'—Abhinavagupta explains the verse as follows "लावण्य सस्थानमुग्धिमा कान्ति प्र । ताभ्या परिपूरितानि सविभक्तानि हृद्यानि सपादितानि दिङ्मुखानि येन । अधुना कोपकालुष्यात् अनन्तर प्रसादोन्मुखेन स्मेरे ईषदविहसनशीले तरलायते प्रसादान्दोलनविकासमुन्दरे अक्षिणी यस्या तस्या आमन्त्रणम् । अथ चाधुना न एति, वृत्ते तु क्षणान्तर क्षोभमगमत् । कोपकषायपाटल स्मेर च तव मुख सन्ध्यारुणपूर्णशशधरमण्डलमेवेति भाव्य क्षोभेण चलचित्ततया सहृदयस्य । न चैति तत सुव्यवसमन्वर्थतयाय जलराशिर्जाड्यमचय । जलादय शब्दा भावार्थप्रधाना इत्युक्त प्राक् । अत्र च क्षोभो मदनविकारात्मा सहृदयस्य त्वन्मुखावलोकनेन भवतीतीयत्यभिधाया निश्रान्ततया, रूपक ध्वन्यमानमेव । वाच्यालकारदत्वात्र श्लेष । स च न व्यञ्जक । अनुरणनरूप यद्रूपकमर्मशक्तिव्यङ्ग्य तदाश्रयेणेह काव्यस्य चारुत्व व्यवतिष्ठते । ततस्तेनैव व्यपदेश इति सबन्ध ।।"— *Op cit*, pp 263-64 For Mahimabhaṭṭa s observations see *Op cit*, p 431

## TEXT

§ ४५ । उपमाध्वनिर्यथा—

णीराणं रमइ घुसिणरणम्मिणतहा पिआत्थणुच्छङ्गे ।
दिट्ठी रिउगअकुम्भत्यर्म्मि अह बहलसिन्दूरे ॥

यथा वा ममैव विषमबाणलीलायामसुरपराक्रमणे कामदेवस्य—

तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसं ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेण ॥

आक्षेपध्वनिर्यथा—

स वक्तुमखिलाञ् शक्तो हयग्रीवाश्रितान् गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥

अत्रातिशयोक्त्या हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपस्यासाधारणतद्विशेषप्रकाशनपरस्याक्षेपस्य प्रकाशनम् ॥

## EXPOSITION

§ 45. 'वीराण...बहलसिन्दूरे'—*Locana* thus explains the verse : प्रसाधितप्रियतमाश्वासनपरतया समनन्तरीभूतयुद्धत्वरितमनस्कतया च दोलायमानदृष्टित्वेऽपि युद्धे त्वरातिशय इति व्यतिरेको वाच्यालङ्कारः । तत्र तु येयं ध्वन्यमानोपमा प्रियाकुचकुड्मलाभ्यां सकलजनत्रासकरेष्वपि शात्रवेषु मर्दनोद्यतेषु गजकुम्भस्थलेषु तद्दर्शन रतिमादधानामिव बहुमान इति सैव वीरतातिशयचमत्कारं विधत्त इत्युपमायाः प्राधान्यम् ॥—*Op. cit.*, pp. 264–65.

'यथा....कुसुमबाणेन'—'असुरापराक्रमणे इति । त्रैलोक्यविजयो हि तत्रास्य वर्ण्यते । तेषामसुराणां पातालवासिनां यः पुनः पुनरिन्द्रपुरावमर्दनादि किं किं न कृतं तदपूर्वमिति यत्तेभ्योऽतिदुष्करेभ्योऽपि अकम्पनीयव्यवसायं तच्च । श्रीसहोदराणामत एव अनिर्वाच्योत्कर्षाणामित्यर्थः । तेषां रत्नानाम् आ समन्तात् हरणे एकरसं तत्परं यद् हृदयं तत् कुसुमबाणेन सुकुमारतरोपकरणसंभारेण प्रियाणां बिम्बाधरे निवेशितम् , तदवलोकन-परिचुम्बन-दर्शनमात्रकृत्यताऽभिमानयोगि तेन कामदेवेन कृतम् । तेषां हृदयं तदत्यन्तं विजिगीषाज्वलनजाज्वल्यमानमभूदिति यावत् । अत्रातिशयोक्तिर्वाच्यालंकारः । प्रतीयमाना चोपमा । सकलरत्नसारतुल्यो बिम्बाधर

इति हि तेषां बहुमानो वास्तव एव। अत एव न रूपकध्वनिः। रूपकस्यारोप्यमाणत्वेन अवास्तवत्वात्। तेषामसुराणां वस्तुवृत्त्यैव सादृश्यं स्फुरति। तदेव च सादृश्यं चमत्कारहेतुः प्राधान्येन ॥—*Op. cit.*, pp 265–66 Thus, the above two verses are instances of अर्थशक्तिमूलोपमाध्वनि.

'स वक्तुम्... महोदधे'—According to Ānandavardhana this verse illustrates आक्षेपध्वनि, because the *impossibility* of describing the innumerable qualities of Hayagrīva is suggested from the apparent assertion to the contrary As Abhinavagupta puts it 'अवर्णनीयताप्रतिपादनमेवाक्षेपस्य रूपमिष्ट-प्रतिषेधात्मकत्वात्'. But Ruyyaka in his *Alaṅkāra Sarvasva* criticises this view of the Dhvanikāra He contends that *real negation* does not constitute आक्षेप The *negation* must be *apparent* and *unreal* But in the illustration cited by the Dhvanikāra the *suggested negation* of the possibility of description is *real* and *consequently* he is *erroneous* We quote the following extract from Ruyyaka's treatise —

अयं चाक्षेपो गम्यमानोऽपि भवति। यथा—

'गणिकासु निषेधो मे विश्वासो वल्लभे त्वया।
किं किं न कुर्वतेऽन्यमिमा धनपरायणाः'॥'

अत्र हि गणिकाया उक्तौ तद्भावितप्रस्तावे नाह गणिकेति प्रतीयते। न चासौ निषेध एव। गणिकात्वेनावस्थितस्यैव गणिकात्वस्य निषेधनात्। सोऽयं प्रस्तुताङ्गो निषेधाभासरूपो यथा तथा गणिकायां शुद्धस्नेहनिबन्धनत्वेन प्रत्यभिमुखत्वादौ विशेषे पर्यवस्यति इत्युक्तविषय आक्षेपध्वनिरयम्॥ न तु—'स वक्तुमखिलान् शक्तो'—इत्याक्षेपध्वनावुदाहार्यम्। निषेधस्यात्र गम्यमानत्वात्। न निषेधाभासस्य। गुणानां वस्तुमशक्यत्व एवात्र तात्पर्यम्। तन्निमित्त एवात्र चमत्कारो न निषेधाभासहेतुक इति नाक्षेपध्वनिरत्र कार्यः।

सर्वेष्टनिषेधाभासस्य विध्युन्मुखस्याक्षेपत्वमिति स्थितम् ॥"—*Op. cit.*, p. 119. But Jagannātha justifies the Dhvanikāra's view by controverting Rūyyaka's criticism. Comp. इत्थं स्वस्वाभिमानभेदादाक्षेपाणां भेदात्तद्ध्वनीनां स्थिते विवेके 'स वक्तुम्—' इति पद्यं ध्वनिकारैराक्षेपध्वनित्वेनोदाहृतं 'स्वाभिमताक्षेपानभिव्यक्तेरनुदाहरणमेवैतत्' इति निर्युक्तिकं वदन् अलंकारसर्वस्वकृत् परास्तः। न हि आभासरूप एव निषेध आक्षेप इत्यस्ति वेदस्याज्ञा। नापि प्राचामाचार्याणाम्। नचापि युक्तिः। येन ध्वनिकारोक्तमुपेक्ष्य त्वदुक्तं श्रद्दधीमहि। प्रत्युत वैपरीत्यमेवोचितम्। ध्वनिकृतामालंकारिकसरणिव्यवस्थापकत्वात्। न हि अस्मिन् शास्त्रे आक्षेपादिशब्दसंकेतग्राहकं प्रमाणान्तरमस्ति, ऋते प्राचीनवचनेभ्यः। अन्यथा सकलविपर्यासापत्तेः ॥—*Op. cit*, pp. 567-68.

TEXT

§ ४६। अर्थान्तरन्यासध्वनिः शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानुरणनरूपव्यङ्ग्यश्च संभवति। तत्राद्यस्योदाहरणम्—

देव्वाएत्तम्मि फले किं कीरइ एत्तिअं पुणा भणिमो।
कङ्किल्लपल्लवाः पल्लवाणँ अण्णाणं ण सरिच्छा ॥

पदप्रकाशश्चायं ध्वनिरिति वाक्यस्यार्थान्तरतात्पर्येऽपि सति न विरोधः। द्वितीयस्योदाहरणं यथा—

हिअअट्ठाविअमण्णुं अवरुण्णमुहं हि मं पसाअन्त।
अवरद्धस्स वि ण हु दे पहुजाणअ रोसिउं सक्कं ॥

अत्र हि वाच्यविशेषेण सापराधस्यापि बहुमस्य कोपः कर्तुमशक्य इति समर्थकं सामान्यमन्वितमन्यत् तात्पर्येण प्रकाशते ॥

EXPOSITION

§ 45. अर्थान्तरन्यासध्वनिः........संभवति — Though शब्दशक्तिमूलध्वनि has been discussed in a previous context and

the present section exclusively deals with अर्थशक्तिमूलध्वनि, yet Ānandavardhana has here a passing reference to शब्दशक्तिमूलार्थान्तरन्यासध्वनि As Abhinavagupta remarks: संभवतीत्यनेन प्रसंगात् शब्दशक्तिमूलस्यात्र विचार इति दर्शयति।' —Op cit, p 256.

'देव्याएत्तम्मि..... सरिच्छा'—Here the word फल is श्लिष्ट meaning *'fruit'* and *'reward'* Cp *'Locana*: "अशोकस्य फलमाभाविवत् नास्ति, किं क्रियता, पल्लवास्तु अतीव हृद्या इतीयताऽभिधा समाप्तैव। अथ फलशब्दस्य शक्तिवशात् समर्थकमस्य वस्तुनः पूर्वमेव प्रतीयते—'लोकोत्तरजिगीषातदुपायप्रवृत्तस्यापि हि फलं सपल्लवस्य दैवायत्तं कदाचित् न भवेदपि'—इत्येवरूप सामान्यात्मकम्॥" —*Op. cit*, p 267. Thus, the suggested sense—*viz.* that the *rewards* of our deeds depend upon the will of Providence is a *universal* ( सामान्यात्मक) statement, and it supports the *expressed* idea—*viz.* that the Aśoka tree, though adorned with twigs ( पल्लव ) of exquisite loveliness, has no *fruits*[1], because Providence ( दैव ) has so ordained it It is a case of पदप्रकाश्य शब्दशक्तिमूलध्वनि, because the substitution of another synonymous word for the single word फल which is श्लिष्ट, would fail to give rise to the cognition of the universal judgement noted above.

पदप्रकाशत्वार्थं न विरोध—Now, one might argue that the verse *as a whole* is an instance of अप्रस्तुतप्रशंसा based on सारूप्य where the statement of an अप्रस्तुत विशेष (*particular idea*) suggests a similar प्रस्तुत judgement For example, the statement about अशोक suggests the idea of a person disappointed in his hopes endowed with merits as he is. Thus it should rather be a case of वाक्यप्रकाशध्वनि. To this

1. Compare. 'भाग्यशोर्ये फल स्यात्'—*Sāhityadarpaṇa*. X.

Ānandavardhana answers that the particular word फल suggests the figure of speech अर्थान्तरन्यास, while the verse as a whole suggests the universal proposition So the factors of substrata of suggestion being different, there is no conflict between the two Comp °*Locana* ननु अस्य सर्ववाक्यस्य अप्रस्तुतप्रशंसा प्राधान्येन व्यङ्ग्या, तत् कथमर्थान्तरन्यासस्य व्यङ्ग्यता, द्वयोर्युगपदेकत्र प्राधान्यायोगादित्याशङ्क्याह—पदप्रकाशेति । सर्वो हि ध्वनिप्रपञ्चः पदप्रकाशो वाक्यप्रकाशश्चेति वक्ष्यते । तत्र फलपदेऽर्थान्तरन्यासध्वनिः प्राधान्येन । वाक्ये तु अप्रस्तुतप्रशंसा । अत्रापि पुनः फलपदोपात्तसामर्थ्यसमर्थकभावप्राधान्यमेव भातीत्यर्थान्तरन्यासध्वनिरेवायमिति भावः ।—*Op cit*, pp. 267-68.

¹ 'हिअअ — सवक'—This is an instance of अर्थशक्तिमूल अर्थान्तरन्यासध्वनि Comp °*Locana* हृदये स्थापितो न बहिः प्रकटितो मन्युर्यथा । अत एवाप्रदर्शितरोषमुखीमपि मां प्रसादयन् हे बहुज्ञ ! अपराद्धस्यापि तव न खलु रोषकरणं शक्यम् । अत्र बहुज्ञेति आमन्त्रणार्थो विशेषे पर्यवसितः । अनन्तरं तु तदर्थपर्यालोचनाद् यत् सामान्यरूपं समर्थकं प्रतीयते तदेव चमत्कारकारि । सा हि खण्डिता सती वैदग्ध्यानुनीता त प्रत्यसूयां दर्शयन्तीत्थमाह । यः कश्चिद् बहुज्ञो धूर्तः स एव सापराधोऽपि स्वापराधावकाशमाच्छादयतीति मा त्वमात्मनि बहुमानं मिथ्या ग्रहीरिति ।—*Op cit*, p 268

TEXT

§ ४७ । व्यतिरेकध्वनिरप्युभयरूपः संभवति । तत्राद्यस्योदाहरणं प्राक् प्रदर्शितमेव । द्वितीयस्योदाहरणं यथा—

जाएज्ज वणुद्देसे खुज्ज च्चिअ पाअवो गडिअवत्तो ।
मा माणुसम्मि लोए ताएक्करसो दरिद्दो अ ॥

अत्र हि त्यागैकरसस्य दरिद्रस्य जन्मानभिनन्दनं त्रुटितपत्रकुब्जपादपजन्माभिनन्दनं च साक्षाच्छब्दवाच्यम्। तथाविधादपि पादपात् तादृशस्य पुंस उपमानोपमेयत्वप्रतीतिपूर्वकं शोच्यतायामाधिक्यं तात्पर्येण प्रकाशयति॥

## EXPOSITION

§ 47. तत्र......प्रदर्शितमेव—*Vide* the verses 'खं येऽत्युज्ज्वलयन्ति' and 'रक्तस्त्वम्—' for शब्दशक्तिमूलव्यतिरेकध्वनि. अत्र हि......प्रकाशयति—Anandavardhana states that the *contrast* (व्यतिरेक) between a tree, gnarled and devoid of foliage, and a generous and kind hearted person in straitened circumstance is cognised in the wake of the *similarity* (सादृश्य) which is first apprehended, since, as has been noted before, व्यतिरेक must be based on औपम्य. Comp. *Locana*: जायेय, वनोद्देशे एव वनस्यैकान्ते गहने यत्र स्फुटतरबहुवृक्षसपत्या प्रेक्षतेऽपि न कश्चित्। कुब्ज इति रूपघटनादावनुपयोगी। गलितपत्र इति। छायामपि न करोति। तस्य का पुष्पफलवत्तेत्यभिप्रायः। तादृशोऽपि कदाचिदाङ्गारिकस्योपयोगी भवेत् उलूकादीनां वा निवासायेति भावः। मानुष इति। सुलभार्थिजन इति भावः। लोक इति। यत्र लोक्यते सोऽर्थिभिस्तेन चार्थिजनो न च किञ्चित् शक्यते कर्तुं तन्महद् वैशसमिति भावः। अत्र वाच्यालङ्कारो न कश्चित्। उपमानेत्यनेन व्यतिरेकस्य मार्गपरिशुद्धिं करोति। आधिक्यमिति। व्यतिरेकमित्यर्थः॥—*Op. cit.*, pp 269 270. *Vide Vyaktiviveka*: 'जाएज्ज—' इत्यत्र यथोक्तस्वरूपस्याप्रस्तुतस्यैव वनपादपस्य, पुंसश्च कस्यचिद् दरिद्रस्य प्रस्तुतस्य अनुपयोगितया निष्फलतोपमयोरप्यभिनन्द्यजन्मताप्रतीतौ तुल्यायां यदेतदेकस्यैव जन्मानभिनन्दनं नेतरस्य तत् तस्य शोच्यतातिरेकलक्षणं व्यतिरेकमनुमापयतीत्यस्य व्यतिरेकानुमिति-व्यपदेशसिद्धिः॥—*Op. cit.*, p. 437.

**TEXT**

§ ४८। उत्प्रेक्षाध्वनिर्यथा—

चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः।
मूर्च्छयत्येष पथिकान् मधौ मलयमारुतः॥

अत्र हि मधौ मलयमारुतस्य पथिकमूर्च्छाकारित्वं मन्मथोन्माथदायित्वेनैव। तत्तु चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितत्वेनोत्प्रेक्षितमित्युत्प्रेक्षा साक्षादनुक्ताऽपि वाक्यार्थसामर्थ्याद् अनुरणनरूपा लक्ष्यते। न चैवंविधे विषय इवादिशब्दप्रयोगमन्तरेण असम्बद्धतैवेति शक्यते वक्तुम्। गमकत्वादन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात्। यथा—

ईसाकलुसस्य वि तुह मुहस्स ण एस पुण्णिमाचन्दो।
अज्ज सरिसत्तणं पाविऊण अङ्गे विअ ण माइ॥

यथा वा—

त्रासाकुलः परिपतन् परितो निकेतान्
पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि।
तस्थौ तथापि न मृगः क्वचिदङ्गनाभि-
राकर्णपूर्णनयनेषुहतेक्षणश्रीः॥

शब्दार्थव्यवहारे च प्रसिद्धिरेव प्रमाणम्॥

**EXPOSITION**

§ 48 Here the expressed sense is coherent and complete in itself, even without the apprehension of उत्प्रेक्षा, if we take 'मूर्च्छित.' to mean *'swelled, increased'* ( उपचित ). But when the वाच्यार्थ has been understood, the idea of उत्प्रेक्षा in the form 'मूर्च्छित इव' where the root मुर्च्छ means *'to swoon away'* is suggested.[1] As Abhinavagupta remarks—"विषपानेन हि मूर्च्छितो वृहित उपचितो मोहं करोति। एकश्च मूर्च्छितः

1. 'मुर्च्छ मोहसमुच्छ्राययोः'—Dhātu-Patha.

पथिकमध्येऽन्येषामपि धैर्यच्युतिं विदधन्मूर्च्छां करोति-इत्युभयथोत्प्रेक्षा ॥"—*Thus*, it is a case of उत्प्रेक्षाध्वनि, and not of प्रतीयमानोत्प्रेक्षा, which should not be confounded with the former.[1] Viśvanātha distinguishes the two categories thus : प्रतीयमानोत्प्रेक्षा यथा—

'तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम् ।
हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥'

—अत्र लज्जयेवेतीवाद्यभावात् प्रतीयमानोत्प्रेक्षा । एवमन्यत् । ननु ध्वनिनिरूपणप्रस्तावेऽलंकाराणां सर्वेषामपि व्यङ्ग्यत्वं भवतीत्युक्तम् । संप्रति पुनर्विशिष्य कथमुत्प्रेक्षायाः प्रतीयमानत्वम् । उच्यते—व्यङ्ग्योत्प्रेक्षायां 'महिला-सहस्स—' इत्यादौ उत्प्रेक्षणं विनापि वाक्यविश्रान्तिः । इह तु स्तनयोर्लज्जाया असंभवात् लज्जयेवेत्युत्प्रेक्षयैवेति व्यङ्ग्य-प्रतीयमानयोर्भेदः ॥'—*Sāhityadarpaṇa*, X.

न चैवंविधे....दर्शनात्—It cannot be argued that the non-mention of the particle इव is a defect here. Since even in a case of प्रतीयमानोत्प्रेक्षा ( as distinguished from उत्प्रेक्षाध्वनि ) the sense of उत्प्रेक्षा is understood even without इव. Ānandavardhana cites the verse 'ईसाकलुसस्स—' in support of his statement. For explanation *see* °*Locana*: 'यस्येवादेरप्रयोगेऽपि तस्यार्थस्योत्प्रेक्षारूपस्यावगतेः प्रतीतेर्दर्शनात् । एतदेवोदाहरति—यथेति । ईर्ष्याकलुषस्यापीषदरुणच्छायाकस्य । यदि तु प्रसन्नस्य मुखस्य सादृश्यमुद्वहेत्, सर्वदा वा, तत् किं कुर्यात् त्वन्मुखं त्वेतद् भवतीति मनोरथानामपि अपथमिदमित्यपिशब्दस्याभिप्रायः । अन्ये

---

1. Kuntaka, however, cites the verse 'चन्दनासक्त—' as an illustration of प्रतीयमानोत्प्रेक्षा, where particles such as इव etc. *expressive* of उत्प्रेक्षा, are understood. *Vide op. cit.*, Résumé ( Unmeṣa III ), p. 194.

स्वदेहे न मात्येव दश दिशः पूरयति यतः। अद्य इयता कालेन एकं दिवसमात्रमित्यर्थः। अत्र पूर्णचन्द्रेण दिशां पूरणं स्वरससिद्धमेव मुत्प्रेक्ष्यते ॥"—*Op. cit*, p. 271.

यथा वा....प्रमाणम्—One might, however, contend that the particle णं ( ननु ) in the above verse signifies उत्प्रेक्षा and consequently it cannot prove the thesis that ( उत्प्रेक्षा is apprehended even if इव etc. are suppressed. Anticipating such a possible objection the Dhvanikāra cites another illustration which is altogether devoid of particles *expressive* ( वाचक ) of उत्प्रेक्षा.

As Abhinavagupta puts it : "ननु ननु-शब्देन वितर्कोत्प्रेक्षारूपमाचक्षाणेन असम्बद्धता निराकृतेति संभाव्यमान उदाहरणान्तरमाह—यथा वेति। परितः सर्वतो निकेतान् परिपतन्नाक्रमन्न कश्चिदपि चापपाणिभिरसौ मृगोऽनुबद्धस्तथाऽपि न क्वचित् तस्थौ ज्ञानचापलयोमात् स्वाभाविकादेव। तत्र चोत्प्रेक्षा ध्वन्यते— अङ्गनाभिराकर्णपूर्णनेत्रशरैर्हता ईक्षणश्रीः सर्वस्वभूता यस्य यतोऽस्तो न तस्थौ।"—*ibid*. Ānandavardhana appeals to the experience of the सहृदय's on this question of *verbal cognition* (शाब्दज्ञान). If the सहृदय's apprehend उत्प्रेक्षा even if इव etc. are absent, no logic can controvert this experience, which must be taken valid[1] Mahimabhaṭṭa too reproduces this statement of Ānandavardhana where he reads प्रतीतिः for प्रसिद्धिः. Compare: "शब्दार्थव्यवहारे च प्रतीतिरेव प्रमाणम्। प्रतीतार्थस्यापि शब्दः प्रयुज्यमानः पौनरुक्त्यमेवावहतीति अथैवार्थस्य अवगमाद् उत्प्रेक्षानुमितिरित्येषा व्यपदिश्यते ॥"—*Op. cit.*, pp. 439-40.

---

1. Compare 'युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया'—Dharmakīrti.

## TEXT

§ ४९। श्लेषध्वनिर्यथा—

रम्या-इति प्राप्तवतीः पताकाः
रागं विविक्ता इति वर्धयन्तीः।
यस्यामसेवन्त नमद्वलीकाः
समं वधूभिर्वलभीर्युवानः॥

अत्र वधूभिः सह वलभीरसेवन्तेति वाक्यार्थप्रतीतेरनन्तरं वध्व इव वलभ्य इति श्लेषप्रतीतिरशब्दाऽप्यर्थसामर्थ्यान्मुख्यत्वेन विवर्त्तते॥

## EXPOSITION

§ 49. The word 'समम्' denotes *'similarity'* ( तुल्यम् ) as well as *'simultaneity'* ( सह ). When the expressed sense is cognised the second meaning of 'समम्'—*viz.* सह, is taken into account. But to सहृदय's, the first meaning is suggested thereafter, which leads to the apprehension of the *double entendre* in the adjuncts qualifying वलभी:—*viz.* रम्याः, पताकाः, प्राप्तवती. etc. which now qualify the term वधू also, thus finally suggesting the apprehension of similarity between वधू and वलभी. Compare *'Locana*. पताका ध्वजपटान् प्राप्तवतीः। रम्या ति हेनो.। पताका. प्रसिद्धी. प्राप्तवतीः। किमाकाराः प्रसिद्धीः, रम्या इत्यैवमाकाराः। विविक्ता जनसङ्कुलत्वाभावाद् इरमतो हेतो रागं सम्भोगाभिलाष वर्धयन्तीः। अन्ये तु रागं चित्रशोभामिति। तथा रागमनुराग वर्धयन्ती.। यतो हेतो विविक्ता विभक्ताङ्गयो लटभा या। नमन्ति वलीकानि छदिपर्यन्तभागा यासु। नमन्त्यो वल्यस्त्रिवली लक्षणा यासाम्। समभिति सहेत्यर्थः॥ ननु सम शब्दान् तुल्यार्थोऽपि प्रतीत.। सत्यम्। सोऽपि श्लेषबलात्। श्लेषस्य नाभिधावृत्तेराक्षिप्त, अपि स्वर्यसौन्दर्यबलादेवेति सर्वथा ध्वन्यमान एव श्लेषः। अत एव वध्व इव वलभ्य

इत्यभिदधताऽपि वृत्तिकृतोपमाध्वनिरिति नोक्तम्। श्लेषस्यवात्र मूलत्वात्। समा इति हि यदि स्पष्ट भवेत् तदोपमैया एव स्पष्टत्वाच् श्लेषस्तदाक्षिप्तः स्यात्। सममिति निपातोऽञ्जसा सहार्थवृत्ति-व्यंञ्जकत्वबलेनैव क्रियाविशेषणत्वेन शब्दश्लेषतामेति। न च तेन विनाऽभिधाया अपरिपुष्टता काचित्। अत एव समाप्तायामेवाभिधायां सहृदयैरेव स द्वितीयोऽर्थोऽपृथकप्रयत्नेनैवावगम्य। यथोक्तं प्राक्-'शब्दार्थ-शासनज्ञानमात्रेणैव'—इत्यादि। एतच्च सर्वोदाहरणेष्व-नुसर्तव्यम्। 'पीनश्चैत्रो दिवा नात्ति'-इत्यत्राभिधैवापर्यवसिता इति सैव स्वार्थनिर्वाहायार्थान्तर शब्दान्तर वा कल्पतीत्यनुमानस्य श्रुतार्थापत्तेर्वा तार्किक-मीमांसकयोर्न ध्वनिप्रसङ्ग इत्यल बहुना॥— pp. 272-74 Mahimabhaṭṭa's comments on this verse are worth note: 'रम्या—' इत्यत्र काव्यार्थप्रतीतेरनन्तरमुपमाप्रतिभोद्-भवनिबन्धनभूतं न किञ्चिदवधारयाम., यत्सामर्थ्यात् वध्व इव वलभ्य इत्ययमुमर्थमवगच्छेम। न चोभयार्थसाधारणस्य वलभीविशेषण-कलापस्यैव तत्र निबन्धनभावोऽवगन्तु युक्तः। तस्य भिन्नविभक्तिकस्य वधूभिरभिसम्बन्धानुपपत्तेरित्युक्तमेव। अथ सममित्यस्य तुल्यार्थस्य वधूवलभीसम्बन्धबलात् विभक्तिविपरिणामेन कल्पिततदुचितविभ-क्त्यन्ताना वधूना विशेषणकलापाभिसम्बन्धसहत्वात् वलभीभिः सहोप-मानोपमेयभावावगतिर्भवति, यथा 'सममिन्दुना सकलकलोऽब्धिरुदित.'- इति। एव तर्हि तुल्यतासम्बन्धाव रण निबन्धनैव वधूवलभीनामु-पमानोपमेयभावावगतिरिति नामौ अनुमेयतामतिपतति इति श्लेषानु-मितिरिति उच्यते॥—*Op cit*, pp 440-41

## TEXT

§ ५०। यथासंख्यध्वनिर्यथा—

अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च सहकारः।
अङ्कुरितः पल्लवितः पुष्पितश्च हृदि मदनः॥

अत्र हि यथोद्देशमनूद्देशे यच्चारुत्वमनुरणनरूपं मदनविशेषणभूताङ्कुरिताविशब्दगतं तन्मदनसहकारयोस्तुल्ययोगितासमुच्चयलक्षणाद् वाच्यादतिरिच्यमानमालक्ष्यते । एवमन्येऽप्यलंकारा यथायोगं योजनीयाः ॥

## EXPOSITION

§ 50. *Vide* Mahimabhatta's remarks 'अङ्कुरित —' इत्यत्र मुख्यामुख्याङ्कुरितत्वादिधर्मविशिष्टया सहकारमदनयो प्रमाणान्तरावगतकार्यकारणभावयोरपि अतिशयोक्तिच्छायया यस्तुल्यकालतयोपनिबन्धस्तत्र कार्यकारणधर्मिणा यथाश्रुतक्रम सत्यासाम्यमेव यथासत्यमनुमापयति, यथाश्रुतक्रमातिक्रमे प्रयोजनाभावात् निबन्धनाभावाच्च । को हि अविप्लुतमतिरसति बाधके श्रुतमर्थमनादृत्य अश्रुतं परिकल्पयेत् इति यथासत्यानुमितिरितीयमुच्यते—*Op cit*, p. 442

एवमन्येऽपि....योजनीया —Abhinavagupta in the following extract cites a few more instances of अर्थशक्तिमूलालङ्कारध्वनि Comp यथा च दीपकध्वनि —

'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।

वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥

इत्यत्र चाधिष्टेति गोप्यमानादेव दीपकादत्यन्तस्नेहास्पदत्वप्रतिपत्त्या चारुत्वनिष्पत्ति । अप्रस्तुतप्रशंसाध्वनिरपि—

हुण्डुल्लन्तो मरिहिसि कण्टअकलिआइ केअइवणाइं ।

मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ॥

प्रियतमेन साकमुद्याने विहरन्ती काचिन्नायिका भ्रमरमेवमाहेति भृङ्गस्य अभिधाया प्रस्तुतत्वमेव । न चामन्त्रणादप्रस्तुतत्वावगति, प्रत्युतामन्त्रणे तस्या मौग्ध्यविजृम्भितमिति अभिधया तावत् नाप्रस्तुतप्रशंसा सम्भाव्या । समाप्तायां पुनरभिधायां वाच्यार्थबलादन्यापदेशता ध्वन्यते । यत् सौभाग्याभिमानपूर्णा सुकुमारपरिमलमालतीकुसुम-

सदृशी कुलवधूर्निर्व्याजप्रेमपरतया कृतकवैदग्ध्यप्रसिद्धातिशयानि शम्भलीकण्टकव्याप्तानि दूरामोदकेतकीवनस्थानीयानि वेश्याकुलानीतश्चेतश्च चञ्चूर्यमाणं प्रियतममुपालभते ॥ अपह्नुतिध्वनिर्यथा अस्मदुपाध्यायभट्टेन्दुराजस्य—

य: कालागुरुपत्रभङ्गरचनावासैकसारायते
गौराङ्गीकुचकुम्भभूरिसुभगाभोगे सुधाधामनि ।
विच्छेदानलदीपितोत्कवनिताचेतोधिवासोद्भव
सन्तापं विनिनीषुरेष वितततरङ्गैर्नताङ्गि स्मरः ॥

अत्र चन्द्रमण्डलमध्यवर्तिनो लक्ष्मणो वियोगाग्निपरिचितवनिताहृदयोदितप्लोषमलीमसच्छवि-मन्मथाकारतयाऽपह्नवो ध्वन्यते। अत्रैव ससन्देहध्वनिः—यतश्चन्द्रवर्तिनस्तस्य नामापि न गृहीतम्। अपि तु गौराङ्गीस्तनाभोगस्थानीये चन्द्रमसि कालागुरुपत्रभङ्गविच्छित्त्यास्पदत्वेन यः सारतामुत्कृष्टतामाचरतीति तन्न जानीमः, किमेतद्वस्त्विति ससन्देहोऽपि ध्वन्यते। पूर्वमनङ्गीकृतप्रणयामनुतप्ता विरहोत्कण्ठिना वल्लभागमनप्रतीक्षापरत्वेन कृतप्रसाधनादिविधितया वासकसज्जीभूता पूर्णचन्द्रोदयावसरे दूतीमुखामीतः प्रियतमस्त्वदीयकुचकलशन्यस्त-कालागुरुपत्रभङ्गरचना मन्मथोद्दीपनकारिणीति चाटुकं कुर्वाणश्चन्द्रवर्तिनी चेयं कुवलयदलश्यामलकान्तिरेवमेव करोतीति प्रतिवस्तूपमाध्वनिरपि। सुधाधामनीति चन्द्रपर्यायतयोपात्तमपि पदं सन्तापं विनिनीषुरित्यत्र हेतुतामपि व्यनक्ति इति हेत्वलंकारध्वनिरपि। त्वदीयकुचशोभा मृगाङ्कशोभा च सह मदनमुद्दीपयत इति सहोक्तिध्वनिरपि। 'त्वत्कुचसदृशश्चन्द्रश्चन्द्रसमस्त्वत्कुचाभोग' इत्यर्थप्रतीतेरुपमेयोपमाध्वनिरपि। एवमन्येऽप्यत्र भेदाः शक्योत्प्रेक्षा। महाकविवाचोऽस्या कामधेनुत्वात्। यत:—

हेलाऽपि कस्यचिदचिन्त्यफलप्रसूत्यै
कस्यापि नालमणवेऽपि फलाय यत्न:।

दिग्दन्तिरोमचलनं धरणिं धुनोति
खात् सपतन्नपि लता चलयेन्न भृङ्गः ॥

—*Op. cit.*, pp. 274-277.

## TEXT

§ ५१ । एवमलङ्कारध्वनिमार्गं व्युत्पाद्य तस्य प्रयोजनवत्तां ख्यापयितुमिदमुच्यते—

**शरीरीकरणं येषां वाच्यत्वे न व्यवस्थितम् ।**
**तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः ॥२८॥**

ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां व्यञ्जकत्वेन व्यङ्ग्यत्वेन च । तत्रेह प्रकरणाद् व्यङ्ग्यत्वेनेत्यवगन्तव्यम् । व्यङ्ग्यत्वेऽप्यलङ्काराणां प्राधान्यविवक्षायामेव सत्यां ध्वनावन्तःपातः । इतरथा तु गुणीभूतव्यङ्ग्यत्वं प्रतिपादयिष्यते ॥

## EXPOSITION

§ 51. Ānandavardhana now brings out the difference between an *expressed* and a *suggested* poetic figure. The self-same poetic figure when suggested comes to acquire an indescribable charm that was foreign to it when it was expressed in words. When *expressed* they are like popular ornaments such as necklace, bangles etc. or if carefully worked out they can at most hope to attain the status of such objects of decoration as कुंकुमद्रव (saffron-paste), that are more closely related to the body than the former. Nevertheless, they remain nothing but external appendages. But those identical अलंकार's are turned into the very soul of poetic art if they are conveyed through the function of suggestion. Such is the spell of the power of *suggestion.* As Abhinavagupta observes: ननूक्तास्तावत् चिरन्तनैरलंकारास्तेषां तु भवता यदि व्यङ्ग्यत्वं प्रदर्शितं किमियतेत्याशङ्क्याह—एवमि-

यादि। येषामलङ्काराणां वाच्यत्वेन शरीरीकरणं शरीरभूतात् प्रस्तुतादर्थान्निरभूततया अशरीराणां कटकादिस्थानीयानां शरीरतापादनं व्यवस्थितं सुकवीनामयत्नसंपाद्यतया। यदि वा वाच्यत्वे सति येषां शरीरतापादनमपि न व्यवस्थितं दुर्घटमिति यावत्। तेऽलङ्कारा ध्वनेर्व्यापारस्य काव्यस्य वाऽङ्गता व्यङ्ग्यरूपतया गताः सन्तः परां दुर्लभां छायां कान्तिमात्मरूपतां यान्ति। एतदुक्तं भवति—सुकविर्विदग्धपुरन्ध्रीवत् भूषणं यद्यपि श्लिष्टं योजयति, तथापि शरीरतापत्तिरेवास्य कष्टसंपाद्या कुङ्कुमपीतिकाया इव।[1] आत्मतायास्तु का संभावनाऽपि। एवम्भूता चेयं व्यङ्ग्यता या अप्रधानभूताऽपि वाच्यमानालङ्कारेभ्य उत्कर्षमलङ्काराणां वितरति। बालक्रीडायामपि राजत्वमिवेत्यमुमर्थं मनसि कृत्वाह—इतरथास्त्विति॥—*Op cit*, pp 278-79

इतरथा तु . प्रतिपादयिष्यते—*Vide Karikā*, III 34 'प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते। यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत्॥'—and *vṛtti* thereon, which reads as follows. "व्यङ्ग्यालङ्कारस्य गुणीभावे दीपकादिविषयः॥"

TEXT

§५२। अङ्गित्वेन व्यङ्ग्यतायामप्यलङ्काराणां द्वयी गतिः। कदाचिद् वस्तुमात्रेण व्यज्यन्ते, कदाचिदलङ्कारेण। तत्र—

व्यज्यन्ते वस्तुमात्रेण यदाऽलंकृतयस्तदा।

---

1 Bhoja in his *Śṛngāraprakaśa* classifies *alamkaras* into three categories, on the basis of the degree of their intimacy with the *expressed sense* which constitutes the body of poetry As he notes अलङ्काराश्च त्रिधा—बाह्या आभ्यन्तरा, बाह्याभ्यन्तराश्च। तेषु बाह्याः—वस्त्र-माल्य-विभूषणादयः। आभ्यन्तरा — स्नान धूप विलेपनादयः॥—*Vide* Dr V Raghavan's *Some Concepts of Alamkāra Śāstra*, p 53

अत्र हेतुः—

ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तिस्तदाश्रया ॥२६॥

यस्मात्तत्र तथाविधव्यङ्ग्यालंकारपरत्वेनैव काव्यं प्रवृत्तम्। अन्यथा तु तद् वाक्यमात्रमेव स्यात् ॥

EXPOSITION

§ 52. The present *Kārikā* has been cited by Mammata under *Kāvyaprakāsa*, v 2[1] Govinda explains the *Kārikā* as follows: "अत्र ध्वन्यङ्गता व्यञ्जकतया। ध्रुवं ध्वन्यङ्गता ध्वनिमेव ता व्यञ्जयन्ते। तद्व्यञ्जकस्य ध्वनित्वमेवेत्यर्थः। कुतः? काव्यवृत्तेस्तदाश्रयात्, काव्यवृत्तेस्तदभिधानपूर्वकत्वात्। वस्तुमात्रापेक्षयाऽलंकारस्य चारुतानियमादित्यर्थः। ननु यथालंकारापेक्षया वस्तुमात्रस्य नातिशयनियमस्तथा कथमलंकारेण वस्तुमात्रव्यञ्जने ध्वनित्वमिति चेत्, उच्यते—स एवार्थो वाच्यः सन् तथा चमत्करोति यथा व्यङ्ग्यतापन्न इत्यनुभवसिद्धम्। अतो वाच्यताऽपकर्षहेतुः, व्यङ्ग्यता तु उत्कर्षायेति स्थितम्। यत्र चालंकारेण वस्तुमात्रं व्यङ्ग्यं तत्रालंकारस्य वाच्यत्वेन किंचिदपकर्षात्, वस्तुमात्रस्य च व्यङ्ग्यत्वेन किंचिदुत्कर्षात् युज्यत एव ध्वनित्वम्। यत्र तु वस्तुनाऽलंकारो व्यज्यते, तत्र वस्त्वलंकारयोर्वाच्यत्व-व्यङ्ग्यत्वाभ्यामतिशयेनैवोत्कर्षापकर्षौ इति कुतो गुणीभूतव्यङ्ग्यत्वावकाशः। इदं तु चिन्त्यम्। एवं चारुत्वाभावनिबन्धनं गुणीभूतत्वं मा भूत्। अगूढत्वादिनिबन्धनं तु तस्मिन् को वारयितेति ॥"—*Pradipa*, p. 145.

---

1 The reading adopted by Mammata is 'काव्यवृत्तेस्तदाश्रयात्, which is also reading in the S.P. Edn of our text.

2 Compare .

'विनोत्कर्षापकर्षाभ्यां स्वदन्तेऽर्था न जातुचित्।
तदर्थमेव कवयोऽलंकारान् पर्युपासते ॥"—*Vyaktiviveka*, p. 218.

TEXT

§ ५३। तासामेवालंकृतीनाम्—

अलंकारान्तरव्यङ्ग्यभावे

पुनः,

ध्वन्यङ्गता भवेत्।

चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥३०॥

उक्तं ह्येतत्— 'चारुत्वोत्कर्षनिबन्धना वाच्यव्यङ्ग्ययोः प्राधान्य-विवक्षे'ति।[1] वस्तुमात्रव्यङ्ग्यत्वे चालंकाराणामनन्तरोपदर्शितेभ्य एवोदाहरणेभ्यो विषय उन्नेयः। तदेवमर्थमात्रेणालंकारविशेषरूपेण वाऽर्थेनार्थान्तरस्यालंकारस्य वा प्रकाशने चारुत्वोत्कर्षनिबन्धने सति प्राधान्येऽर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यो ध्वनिरवगन्तव्यः ॥

EXPOSITION

§ 53. तासामेव....विषय उन्नेयः.—*Vide* notes on *Uddyota* I (Sec. §30 ff). तदेवम्....अवगन्तव्यः—"व्यङ्ग्यस्य व्यञ्जकस्य च प्रत्येकं वस्त्वलंकाररूपतया द्विप्रकारत्वात् चतुर्विधोऽयमर्थशक्त्युद्भव इति तात्पर्यम् ॥"—*Locana*, p 281.

TEXT

§ ५४। एवं ध्वनेः प्रभेदान् प्रतिपाद्य तदाभासविवेकं कर्तुमुच्यते—

यत्र प्रतीयमानोऽर्थः प्रम्लिष्टत्वेन भासते।

वाच्यस्याङ्गतया वाऽपि नास्यासौ गोचरो ध्वनेः ॥३१॥

द्विविधोऽपि प्रतीयमानः स्फुटोऽस्फुटश्च। तत्र य एव स्फुटः शब्दशक्त्यार्थशक्त्या वा प्रकाशते स एव ध्वनेर्मार्गो नेतरः'

1 Cf. *Vṛtti* on 1.13 (*Uddyota* I. Sec. 32).

